र्थिलक्षैरप्यपराङ्मुखचेतसम् । त्वां पराङ्मुखता निन्दु केवलं परयोषित' ॥ ५० ॥ तव निर्वर्णयद्वर्णं स्वर्णं वर्णयतो गिरा । स्वकोशगेहान्निर्गत्य तीर्थेषु वसति ध्रुवम् ॥ ५१ ॥ न समास समर्थस्य यसु व्याकरणस्य ते । विग्रहो नैव केनापि न पर सर्वनामभाक् ॥ ५२ ॥ अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत् । तदवस्था पुनर्देव नान्यस्य मुखमीक्षते ॥ ५३ ॥ धैर्यलावण्यगाम्भीर्यप्रमुखैस्त्वमुदन्वत । गुणैस्तुल्योऽसि भेदस्तु वपुषैवेदृशेन ते ॥ ५४ ॥ अलौकिकमहालोकप्रकाशितजगत्त्रय । स्तूयते देव सद्वशमुक्तारत्न न कैर्भवान् ॥ ५५ ॥ शासति त्वयि हे राजन्नखण्डावनिमण्डलम् । न मनागपि निश्चिन्ते मण्डले शत्रुमित्रयो ॥ ५६ ॥ मत्वा लोकमदातारं संतोषे यै कृता मति । त्वयि राजनि ते राजन्न तथा व्यवसायिन ॥ ५७ ॥ पद्मोदयदिनाधीश सदागतिसमीरण । भूभृदावलिदम्भोलिरेक एव भवान्भुवि ॥ ५८ ॥ सैञ्चारीभरणोमा यमाराध्य विधुशेखरम् । संचारीभरणोऽमायस्ततस्त्वं पृथिवीं जय ॥ ५९ ॥ देव त्वमेव पातालमाशाना त्व निबन्धनम् । त्वं चामरमरुद्भूमिरेको लोकत्रयात्मक ॥ ६० ॥ जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविण । अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणा ॥ ६१ ॥ अखण्डमण्डल श्रीमान्पश्यैष पृथिवीपति । न निशाकरवज्जातु कलावैकल्यमागत ॥ ६२ ॥ अरातिविक्रमालोकविकस्वरविलोचन । कृपाणोदग्रदोर्दण्ड स सहस्राक्षीयति ॥ ६३ ॥ कानने सरिदुद्देशे गिरीणामपि कन्दरे । पश्यन्त्यन्तकसंकाशं त्वामेकं रिपव पुर ॥ ६४ ॥ उद्दण्डे भुजदण्डे तव कोदण्डे परिस्फुरति । अरिमण्डलरविमण्डलरम्भाकुचमण्डलानि वेपन्ते ॥ ६५ ॥ भवतामहमिव बहवो मम तु भवानिव भवानेव । कुमुदिन्या कति न विधोर्विधुरिव विधुरेव कुमुदिन्या ॥ ६६ ॥ लब्धार्धचन्द्र ईश कृतकसभयं च पौरुषं विष्णो । अद्यापि नाभिजात केनोपमिमीमहे नृप भवन्तम् ॥ ६७ ॥ सरलप्रिय गुणाढ्य लम्बितमाल विचित्रतिलक च । मनमिव वपुस्तनैतत्कथमनन नृप जनस्यास ॥ ६८ ॥ बाणकरवीरदमनकशतपत्रकबन्धुजीवकुसुमानि । नृप विविधविटपरूपस्तथापि विटप कथं नासि ॥ ६९ ॥ स्तनयुगमश्रुस्नात समीपतरवर्ति हृदयशोकाग्ने । चरति विमुक्ताहार व्रतमिव भवतो रिपुस्त्रीणाम् ॥ ७० ॥ कल्पतरुकामदोग्ध्रीचिन्तामणिधनदशङ्खानाम् । रचितो रजोभरपयस्तेजश्वासान्तरैस्त्वमेरप ॥ ७१ ॥ तिग्मरुचिरप्रतापो विधुरनिशाकृद्विमो मधुरलील । मतिमानितत्त्ववृत्ति प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥ ७२ ॥ शनिरेरीनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् । यत्र प्रसीदसि पुन स भात्युदारोऽनुदारश्च ॥ ७३ ॥ क्षणदासावेक्षणदा वनमर्जन व्यसनमैव्यसनम् । बत वीर तव द्विषता पराङ्मुखे त्वयि पराङ्मुख सर्वम् ॥ ७४ ॥ प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् । दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥ ७५ ॥ गिरयोऽप्युन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीरा । विश्वंभराप्यतिलघुर्नरनाथ तवान्तिके नियतम् ॥ ७६ ॥ समदमतगजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् । क्षितितिलक त्वयि तटजुषि शकरचूडापगापि कालिन्दी ॥ ७७ ॥ विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च । प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥ ७८ ॥ पल्लवत कल्पतरोरेष विशेष करस्य ते वीर । भूषयति कर्णमेक परस्तु कर्णं तिरस्कुरुते ॥ ७९ ॥ हरवन्न विषमदृष्टिर्हरिवन्न विभो निधूतवितततृष्ण । रविवन्न चातिदु सहकैरतापितभू कदाचिदसि ॥ ८० ॥ स्तनयुगमुक्ताभरणा

१ मित्र 'स्वर्ण' २ सतीर्नारीर्बिभर्ति पालयतीति सञ्चारीभरणा तादृशीमुमां याति पत्नीत्वेन प्राप्नोति यस्तम् ३ सञ्चा अवसन्ना अरीणामिभा हस्तिनो यस्मात्तादृशो रणो यस्य तादृशोऽमायोऽकपट ४ अलमत्यर्थं पाता पालक; पक्षे,-पाताललोक ५ आशानामभिलाषाणां निबन्धनं मूलम्, पक्षे,-आशानां दिशां निबन्धन ज्ञापक, भूलोक इत्यर्थ ६ चामरमरुता चामरीयवायूनां भूमिराश्रय चामरवीज्यमानत्वात्, पक्षे,-अमराणां मरुद्गणानां च भूमिराश्रय, स्वर्गलोक इत्यर्थ ७ मण्डल राज्य बिम्बं च ८ कलावैदग्ध्य चन्द्रषोडशांशश्च ९ चन्द्रकला; पक्षे,-गलहस्त १० कृतकसभयम्, पक्षे, -कृत-कंस-भयम् ११ न-अभिजात कुलीन, पक्षे,-नाभिजात-

१ सरला वृक्षविशेषा प्रियगव एतेषां समाहारस्तेनाढ्य पूर्णम्; पक्षे,-सरलं च तत्प्रियं हृद्यं च गुणैर्गौरवत्वादिभियुक्तम् २ लम्बिनम्रमाला यस्मिंस्तत्, पक्षे,-लम्बिमाला माल्यं यस्य ३ विचित्रा नानाविधास्तिलका वृक्षविशेषा यस्मिंस्तत्; पक्षे,-विचित्रो विचित्रवर्णस्तिलक कस्तूरीकुङ्कुमादिकृतो यस्मिंस्तत् ४ विटा पालयतीति स ५ कुबेर ६ विधिविशेष ७ परागसमूह ८ श्वासाभ्यन्तरप्रकाशम् ९ एष राजा कल्पवृक्षादीनां क्रमेण रजोभरादिभि पञ्चभिर्भूतै रचित इत्यन्वय १० विधुराणां शत्रूणां निशेव निशा मरणं तत्कर्ता ११ मतिर्वस्तुतत्त्वावधारणक्षमा बुद्धि, मान प्रमाण ताभ्यां तत्त्वे याथार्थ्ये वृत्तिरनुसरणं यस्य स १२ प्रतिपद प्रतिस्थानं पक्षाणामात्मीयानामग्रणीरग्रसर १३ शनिग्रह १४ वज्रम् १५ महान् १६ अनुगता दारा वनिता यस्य वशीकृतवनित इत्यर्थ १७ अनुत्सवदा १८ रक्षकम्, शत्रूणां पलायनस्थानत्वात् १९ पत्रनृत्यादि २० अविस्तीर्णम्, दु खदशायां तदभिस्तारात् २१ राधेयम्, दानातिशयेनेत्यर्थ २२ असमदृष्टि, पक्षे,-त्रिलोचन २३ दुष्टजनम्, पक्षे,-वृषासुर २४ राजमार्गभाग, पक्षे,-किरणा

कण्टककलिताङ्गयष्टयो देव । त्वयि कुपितेऽपि प्रागिव निश्शङ्कास्ते रिपुस्त्रियो जाताः ॥ ८१ ॥ सततमुसलासङ्गाद्बहुतरगृहकर्मघटनया नृपते । द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥ ८२ ॥ कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः । धरणीव धृतिर्धृतिरिव धरणी सततं विभाति यस्य तव ॥ ८३ ॥ रत्नसानुशिखराङ्गणफुल्लकल्पपादपतलेषु निषण्णाः । उद्गृणन्ति नृपहंस सुवर्णं त्वद्यशः प्रमरकिंनररामाः ॥ ८४ ॥ गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः । ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम् ॥ ८५ ॥ बलमार्तभयोपशान्तये विदुषां संमतये बहुश्रुतम् । वसु तस्य न केवलं विभोर्गुणवत्तापि परप्रयोजनम् ॥ ८६ ॥ तारका कति न सन्ति मादृशा मादृशस्तु भवदेकजीविनः । अम्बुदस्य कति वा न चातकाश्चातकस्य पुनरेक एव सः ॥ ८७ ॥ निखिलेषु गुणेषु चिन्तता ते मनसो वैभवमद्भुतं तवैव । न च ते परतः प्रमाणभावस्तदपि न्यायनिविष्टतातिचित्रम् ॥ ८८ ॥ स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविधिम् । विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥ ८९ ॥ कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः । पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥ ९० ॥ गुणभेदविदग्रिमप्रसङ्गे व्यवधानादनुपस्थितं पुरस्तात् । अपि वाजिनमात्रशेषमिष्टौ घटयन्वाजिमिरर्च्यसे विधिज्ञैः ॥ ९१ ॥ यदि वै मनसि प्रशान्तिरुच्चैः कुरु कल्पद्रुमदानकौशलम् । न भवेदिति वा वद स्फुटं कलिवर्णं प्रतियामि मन्दिरम् ॥ ९२ ॥ नानन्वयस्ते न च ते विरोधोऽल्लकारकोटौ तव नोपमापि । क्षितीश नो ते विषमं न किंचित्साहित्यसौहित्यनिधिस्त्वयापि ॥ ९३ ॥ अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः । ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥ ९४ ॥ तवाहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः । भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः ॥ ९५ ॥ दिशापते विस्तरतो न वस्तु जानामि जानन्नपि ते गुणौघान् । यस्यैव योगस्य प्रथमानकीर्तेः स एव तद्वानिति निर्निरूढिः ॥ ९६ ॥ यशोदयामण्डिततरां तदेहो बाल्येऽपि गोपालजनस्य नेता । गोमण्डलं पासि बलेन युक्तः कथं न राजन्पुरुषोत्तमोऽसि ॥ ९७ ॥ भवतनुः क्षत्रकुलप्रसूतेर्युक्तो न भोगी खलु भोगभाजः । सुजातरूपोऽपि न याति यस्य समानतां काञ्चनकाञ्चनादिः ॥ ९८ ॥ अखण्डिता शक्तिरथोपमानं न सीदति त्वय्युदधीनरेऽस्मिन् । अदृष्टसंदेहविपर्ययस्य कोऽयं तव न्यायनये निवेशः ॥ ९९ ॥ स्वतः प्रकाशो मनसो महत्त्वं धर्मेषु शक्तिर्न तथान्यथा धीः । भूपालगोपालपदैकभक्तेरन्येव नैयायिकता तवेयम् ॥ १०० ॥ यस्यैष पत्रं सगुणं गयामि नीषु प्रोतप्रतिक्ष्मापतिमौलिरत्नाः । गृहीतदीपा इव भिन्दते स्म खङ्गान्धकारे रिपुचक्रवालम् ॥ १०१ ॥ लब्धा यदन्तःपुरसुन्दरीणां लावण्यनिःस्यन्दमुपान्तभाजाम् । गृहीतसारस्त्रिदशैः पयोधिः पीयूषसंदर्शनसौख्यमाप ॥ १०२ ॥ यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात् । पारे परार्धं गणितं यदि स्याद्गणेयनिःशेषगुणोऽपि स स्यात् ॥ १०३ ॥ एतद्यशःक्षीरधिपूरगाहे पतत्यगाधे वचनं कवीनाम् । एतद्गुणानां गणनाङ्कपात प्रत्यर्थिकीर्तीः खटिकाः क्षिणोति ॥ १०४ ॥ देवाधिपो वा भुजगाधिपो वा नराधिपो वा यदि हैहयः स्याम् । सदर्शनं ते गुणकीर्तनं ते सेवाञ्जलिं ते तदहं विदध्याम् ॥ १०५ ॥ अत्यादरादध्ययनं द्विजानामर्थोपलब्ध्या फलवद्विधाय । क्रतूननुच्छानवितुं तवैषा मीमांसकाधिकृतिः प्रसिद्धा ॥ १०६ ॥ तुच्छां तराध्यासमसन्निकृष्टमध्यक्षमत्यन्तमनिच्छतस्ते । अख्यातिसख्यानुगतद्विपश्च ख्यातिं स्थिताऽनिर्वचनीयरूपा ॥ १०७ ॥ अन्यार्थमङ्गीकृततारिपाणौ विशङ्कमानास्तव दाननीरम् । परस्परं दीनमुखा न के वा देवाः सुमेरुं शुशुचुः स्वभूमिम् ॥ १०८ ॥ तवाग्रतो वीर महीमहेन्द्र मन्दं गजाः शृङ्खलिनो विभान्ति । आगःसदानादरिभूपतीनामाशान्तशीला इव सापराधाः ॥ १०९ ॥ कामं नृपाः सन्ति सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् । नक्षत्रतारग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ ११० ॥ दारिद्र्यदायादगणाधमेन दीनो द्विजोऽर्थर्णपदातिसात्कृतः । जागर्ति नाथे त्वयि भो द्विजानां निधेहि तद्येन सुखं भजे नृप ॥ १११ ॥ कमलभूतनया वदनाम्बुजे वसतु ते कमला करपल्लवे । वपुषि ते रमतां कमलाङ्गजः प्रतिदिनं हृदये कमलापतिः ॥ ११२ ॥ उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पयः । निमित्तनैमित्तिकयोरयं विधिस्तव प्रसादस्य पुरस्तु संपदः ॥ ११३ ॥ अनेन सर्वार्थिकृतार्थता कृता हृतार्थिनौ कामगवीसुरद्रुमौ । मिथः पयःसेचनपल्लवाशने प्रदाय दानव्यसनं समाप्नुतः ॥ ११४ ॥ मयि स्थितिर्नम्रतयैव लभ्यते दिगेव तु स्तब्धतया निरुध्यते । इतीव चापं दधदाशुगं क्षिपन्नयनस्य सम्यगुपादिशद्विषाम् ॥ ११५ ॥ नृप कराभ्यामुदतोलयन्निजे नृपानयं यान्पततः पदद्वये । तदीयचूडाभुरनिन्दरदिमभिः स्फुटेयमेनं लसपादरञ्जना ॥ ११६ ॥ इदं नृपप्रार्थिभिरुज्झितोऽर्थिभिर्मणिप्ररोहेण विवृष्य

रोहण । कियद्दिनैरम्बरमावरिष्यते मुधा मुनिर्विन्ध्यमरुद्ध भूधरम् ॥ ११७ ॥ कृत च गर्वाभिमुख मनस्त्वया किमन्य देव निहताश्च नो द्विष । तमासि तिष्ठन्ति हि तावदशुमान्न यावदायात्युदयाद्रिमौलिताम् ॥ ११८ ॥ अनेन पर्यासयता श्रुबिन्दून्मुक्ताफलस्थूलतमान्स्तनेषु । प्रत्यर्पिता शत्रुविलासिनीनामाक्षेपसूत्रेण विनैव हारा ॥ ११९ ॥ अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्र प्रणयन्नुपाधिभि । चतुर्दशत्व कृतवान्कुत स्वय न वेद्मि विद्यासु चतुर्दशस्वयम् ॥ १२० ॥ अमुष्य विद्या रसनाग्रनर्तकी त्रयीव नीताङ्गगुणेन विस्तरम् । अगाहताष्टादशता जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम् ॥ १२१ ॥ दिगीशवृन्दाशविभूतिरीशिता दिशा स कामप्रसरावरोधिनीम् । बभार शास्त्राणि दृश द्वयाधिका निजत्रिनेत्रावतरत्वबोधिकाम् ॥ १२२ ॥ पदैश्चतुर्भि सुकृते स्थिरीकृते कृतेऽमुना के न तप प्रपेदिरे । भुव यदेकाङ्घ्रिकनिष्ठया स्पृशन्दधावधर्मोऽपि कृशास्तपस्विताम् ॥ १२३ ॥ स्फुरद्धनुर्निस्वनतद्धनाशुगप्रगल्भवृष्टिव्ययितस्य सगरे । निजस्य तेज शिखिन परशता वितेनुरङ्गारमिवायश परे ॥ १२४ ॥ अनल्पदग्धारिपुरानलोज्ज्वलैर्निजप्रतापैर्वलय ज्वलद्भुव । प्रदक्षिणीकृत्य जयाय सृष्टया रराज नीराजनया स राजप ॥ १२५ ॥ सिताशुवर्णैर्वयति स्म तद्गुणैर्महासिवेम्न सहकृत्वरी बहुम । दिगङ्गनाङ्गाभरण रणाङ्गणे यश पटतद्भटचातुरीतुरी ॥ १२६ ॥ प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता । अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत ॥ १२७ ॥ अय दरिद्रो भवतेति वैधसीं लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् । मृषा न चक्रेऽल्पितकल्पपादप प्रणीय दारिद्र्यदरिद्रता नृप ॥ १२८ ॥ विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरु । अमानि तत्तेन निजायशोयुगद्विफालबद्धाश्चिकुरा शिर स्थितम् ॥ १२९ ॥ अजस्रमभ्यासमुपेयुषा सम मुदैव देव कविना बुधेन च । दधौ पटीयान्समय नयन्नय दिनेश्वरश्रीरुदय दिने दिने ॥ १३० ॥ अधोविधानात्कमलप्रवालयो शिर सु दानादखिलक्ष्माभुजाम् । पुरेदमूर्ध्वं भवतीति वेधसा पद किमस्याङ्कितमूर्ध्वरेखया ॥ १३१ ॥ सद्वृत्तस देवादय कोऽपि दीनो ऋणाब्धौ विलीनो विहीनो गुणेन । भवत्सनिधिं सन्निधिं प्राप्य पीनो बभूवाशु, मीनो यथा नीरपूरम् ॥ १३२ ॥ कति नो विषया निभालिता कति वा भूमिभुजो न शीलिता । धरणीधर तावका गुणानवधार्याजगण गुरु लघुम् ॥ १३३ ॥ तव नित्यमुत्सवपरम्परा भवत्वनिशत्वमित्थमुपकारसादर । निजकीर्तिकान्तिकलितोज्ज्वले जगत्यथ सत्सुनादिभिरल सुख भज ॥ १३४ ॥ अभ्युद्धृता वसुमती दलित रिपूर क्रोडीकृता बलवता बलिराजलक्ष्मी । एकत्र जन्मनि कृत यदनेन राज्ञा जन्मत्रये तदकरोत्पुरुष पुराण ॥ १३५ ॥ एकस्त्रिधा वससि चेतसि चित्रमत्र देव द्विषा च विदुषा च मृगीदृशा च । ताप च समदरस च रति च पुष्णन्शौर्योष्मणा च विनयेन च लीलया च ॥ १३६ ॥ शक्ति प्रमापयति वीर तवोपमान प्रामाण्यमाप्तवचनेषु परैव जाति । जातौ गुणा गुणगणाश्रयिणो विशेषा वैशेषिक किमपि दर्शनमद्भुत ते ॥ १३७ ॥ किं कारण सुकविराज मृगा यदेते व्योमोत्पतन्ति विलिखन्ति भुव वराहा । देव त्वदस्त्रचकिता श्रयितु स्वजातिमेके मृगाङ्कमृगमादिवराहमन्ये ॥ १३८ ॥ सभाव्यमिष्टभुवनाभयदानपुण्यसभारमस्य वपुरत्र हि विस्फुरन्ति । लक्ष्मीश्च सात्त्विकगुणज्वलित च तेजो धर्मश्च मानविजयौ च पराक्रमश्च ॥ १३९ ॥ प्रत्यक्षरस्रुतसुधारसनिर्विषाभिराशीर्भिरभ्यधिकभूषितभोगभाज । गायन्ति कञ्चुकविनिह्नुतरोमहर्षस्वेदोर्मयस्तव गुणानुरगेन्द्रकन्या ॥ १४० ॥ भद्रात्मनो दुरधिरोहतनोर्विशालवशोन्नते कृतशिलीमुखसग्रहस्य । यस्यानुपप्लुतगते परवारणस्य दानाम्बुसेकसुभग सतत करोऽभूत् ॥ १४१ ॥ साक कुरगकदृशा मधुपानलीला कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते । अन्याभिधायि तव नाम विभो गृहीत केनापि तत्र विषमामकरोदवस्थाम् ॥ १४२ ॥ अत्यायतैर्नियमकारिभिरुद्धताना दिव्यै प्रभाभिरनपायमयैरुपायै । शौरिर्भुजैरिव चतुर्भिरद सदा यो लक्ष्मीविलासभवनैर्भुवन बभार ॥ १४३ ॥ नानाविधप्रहरणैर्नृप सप्रहारे स्वीकृत्य दारुणनिनादवत प्रहारान् । दृप्तारिवीरविसरेण वसुधरेय निर्विप्रलम्भपरिलम्भविधिर्वितीर्णा ॥ १४४ ॥ अन्त पुरीयसि रणेषु सुतीयसि त्व पौर जन तव सदा रमणीयते श्री । दृष्ट प्रियाभिरमृतद्युतिदर्शमिन्द्रसचारमत्र भुवि सचरसि क्षितीश ॥ १४५ ॥ राजन्विभाति भवतश्चरितानि तानि इन्दोर्द्युतिं दधति यानि रसातलेऽन्त । धीदोर्बले अतितते उचितानुवृत्ती आतन्वती विजयसपदमेत्य भात ॥ १४६ ॥ पौर सुतीयति जन समरान्तरेऽस्यावन्त पुरीयति विचित्रचरित्रचञ्चु । नारीयते समरसीम्नि

---

१ राजपक्षे-भद्रशिलीमुखवारणदानकरशब्द यथाक्रम शोभनबाणनिवारकवितरणहस्तबोधका, हस्तिपक्षे तु-भद्रजातिभ्रमरहस्तिमदचलशुण्डादण्डबोधका २ हस्तिमदजल ३ उपायानां सततानुष्ठानमेवायतत्व भुजानामाजानुलम्बितत्वम् ४ उद्धतानां जनानाम्, पक्षे,-असुराणाम् ५ सामदानविधिभेदरूपै, पक्षे,-चतुर्भि

कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना ॥ १४७ ॥ गोष्पदीं तितीर्षति तरङ्गवतीभुजगमादातुमिच्छति करे हरिणाङ्कबिम्बम् । मेरुं लिलङ्घयिषति ध्रुवमेष देव यस्ते गुणान्गदितुमुद्यममादधाति ॥ १४८ ॥ हिमशिशिरवसन्तग्रीष्मवर्षाशरत्सु स्तनतपनतनाम्भोहर्म्यगोक्षीरपाने । सुखमनुभव राजस्त्वद्विषो यान्तु नाश दिवसकमलज्वालाशर्वरीरेणुपङ्के ॥ १४९ ॥ विदधतु धरणीशा दानमुर्वीधरायां प्रभवतु सुजनस्तत्रैरत्र पुण्यशील । निजपरमतिहीन केवल सत्त्वदीनस्त्वमिह नृप कुलीन कार्यकर्ता विभासि ॥ १५० ॥ कवीनां संतापो भ्रमणमभितो दुर्गतिरिति त्रयाणां पञ्चत्व रचयसि न तच्चित्रमधिकम् । चतुर्णां वेदानां व्यरचि नवता वीर भवता द्विषत्सेनालीनामयुतमपि लक्षं त्वमकृथा ॥ १५१ ॥ समाजे सम्राजां सदसि विदुषां धाम्नि धनिनां निकाये नीचानामपि च तरुणीनां परिषदि । वयं यत्रैव स्म क्षणमतिथयस्तत्र शृणुमः स्फुरद्रोमोद्भेदा सुभग भवतः पौरुषकथाः ॥ १५२ ॥ न लोपो वर्णानां न खलु परतः प्रत्ययविधिर्निपातो नास्त्येव क्वचिदपि न भग्ना प्रकृतय । गुणो वा वृद्धिर्वा सततमुपकाराय जगतां मुनेर्दाक्षीपुत्रादपि तव समर्थं पदविधि ॥ १५३ ॥ न मिथ्यावादस्ते न च विगुणचर्चास्वभिरतिर्न वा वाच्यं किंचिद्वचसि न मनागायिनि मतिः । तथाप्येतच्चित्रं यदसि जगतीजानिरधुना त्वमेवैको लोके निगमपरभागार्थनिपुण ॥ १५४ ॥ चकोराणां चन्द्र कुसुमसमय काननभुवां सरोजानां भानुः कुवलय कदम्बं मधुलिहाम् । मयूराणां मेघ प्रथयति यथा चेतसि सुखं तथास्माकं प्रीतिं जनयति तवालोकनमिदम् ॥ १५५ ॥ अदातारं दातृप्रवरमनय निश्चविनय विरूपं रूपाढ्यं विगतजयिनं विश्वजयिनम् । अकुलं कुलं त्वामहमवदमाशापरवशान्नृपानादेस्युक्तिस्त्वयि खलु मृषावादिनि मयि ॥ १५६ ॥ यशःस्तोमानुच्चैरपचिनु चकोरप्रणयिनीरसज्ञापाण्डित्यच्छिदुग्राशिधामभ्रमकरान् । अपि त्वत्तेजोभिस्तमसि शमिते रक्षति दिशामसौ यात्रामैत्रीं नमसि नितरामम्बरमणि ॥ १५७ ॥ सुराणां पातासौ स पुनरतिपुण्यैकहृदयो महत्सत्साम्याने गुरुरुचितमार्गे स निरत । करस्तस्यात्यर्थं वहति शतकोटिं प्रणयिनां स तस्य दाता तृणमिव सुरेश विजयते ॥ १५८ ॥ मनोभूर्मुग्धासु क्षिपति यदि बाणावलिमसौ कथं ताभिः क्षिप्तास्त्वयि नयनविक्षेपविशिखा । अथ ज्ञातं भ्रम शृणु सुभग त्वद्वारनलिनीनवक्रीडाहंसं स्मरमिव विदुस्त्वां मृगदृशः ॥ १५९ ॥ यशश्चन्द्रैश्यमुक्तनरकल्पद्रुमकरे परं लक्ष्मीगर्भैर्द्विरदहयरत्नादिफलदे । निजैर्दानाम्भोभिर्नियततुलितक्षीरजलधिश्चिरं जीयाज्जीयादधिधरणि सोऽयं नरपति ॥ १६० ॥ अयं मार्तण्ड किं स खलु तुरगे सप्तभिरित कृशानु किं सर्वा प्रसरति दिशो नैष नियतम् । कृतान्त किं साक्षान्महिषवहनोऽसाविति चिरं समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटा ॥ १६१ ॥ तुलाधारो धाता वहति वसुधां शूर्पदर्वी फणीशः सास्तु कनकशिखरी मानपलिका । तुलादण्डः सत्यं यदि भवति दामोदरगदा तथाप्येषोऽशक्यस्तव गुणसमूहस्तुलयितुम् ॥ १६२ ॥ न तूणादुद्धारे न गुणघटने मे श्रुतिशिखसमाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि । नृणां द्रष्टे देव क्वचन विशिखान्किंतु पतितद्विपद्वक्षोरुभैरनुमितिरमूनगोचरयति ॥ १६३ ॥ अमुष्योर्वीभर्तुः प्रसृमरचमूसिन्धुरभवैरवैमि प्रारब्धे वमथुभिरविश्यायसमये । न कम्रान्ताम्रं त प्रतिनृपभटा म्लायतु न तद्वधूनेत्राम्भोज भवतु न स तेषां कुदिवस ॥ १६४ ॥ यश पूरं दूरं तनु सुतनुनेत्रोत्पलवनीतमस्त्वाचन्द्रातपं तप सहस्राणि शरदाम् । इयं चास्ता युष्मद्गुणकथनपीयूषपटलश्रितोत्सङ्गानन्दत्सुरनरभुजङ्गा निजगती ॥ १६५ ॥ स्वसुखनिरभिलाष खिद्यसे लोकहेतो प्रतिदिनमथवा ते वृत्तिरेवंविधैव । अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं शमयति परितापं छायया संश्रितानाम् ॥ १६६ ॥ नियमयति कुमार्गप्रस्थितानात्तदण्ड प्रशमयसि विवाद कल्पसे रक्षणाय । अतनुषु विभवेषु ज्ञातय सन्तु नाम त्वयि तु परिसमाप्त बन्धुकृत्यं प्रजानाम् ॥ १६७ ॥ अभिमतफलदाता त्वं च कल्पद्रुमश्च प्रकटमिह विशेष क्वचनोदाहराम । कथमिव मधुरोक्तिप्रेमसमानमिश्रं तुलयति सुरशाखी देव दानं त्वदीयम् ॥ १६८ ॥ अकाण्डधृतमानसव्यवसितोत्सवै सारसैरकाण्डपटुताण्डवैरपि शिखण्डिनां मण्डलैः । दिशः समवलोकिता सरसनिर्भरप्रोल्लसद्भवत्पृथुवरूथिनीरजनिभूरजःश्यामला ॥ १६९ ॥ सहस्रकरपूरणान्निखिलजन्तुनेत्राम्बुजप्रकाशकरणादयं प्रबलवैरितेजोवधात् । दरिद्रितिमिरोद्धृतेरखिलभूपचूडामणिर्जगमं मिरहर्मणिर्जगदिदं च धत्तः समम् ॥ १७० ॥ यश करणघोरणीतुलितरोहिणीवल्लभ त्वया क्षणमुदीक्ष्यते जगति यो दरिद्रो जन । पयोधरमहीधरे नटति तस्य वामभ्रुवां रणत्कनककिङ्किणीकलरवेण देव स्मर ॥ १७१ ॥ यम प्रतिमहीभृतां हुतवहोऽसि तन्नीभृतां सतां खलु युधिष्ठिरो धनपनिर्धनाकाङ्क्षिणाम् । गृहं शरणमिच्छतां कुलिशकोटिमि-

---

१ स्पर्शसंस्याकम्, पक्षे,-शरम्यम् २ पाणिने- ३ पर्वेय

१ परिमाणपाशताम् २ परिमाणपाषाण ३ संधाने ४ आकर्णान्तम् ५ बाणान् ६ प्रसारिण ७ करशीकरे ८ नीहारकाले

निर्मितं त्वमेकं इह भूतले बहुविधो विधात्रा कृतं ॥ १७२ ॥ आलोकान्तप्रतिहततमोवृत्तिरासां प्रजानां तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो न । निष्ठत्येक क्षणमधिपतिर्ज्योतिषां व्योममध्ये षष्ठे काले त्वमपि लभसे देव विश्रान्तिमह्न ॥ १७३ ॥ अध्याक्रान्ता वसतिरमुना-प्याश्रमे सर्वभोग्ये रक्षायोगादयमपि तपः प्रत्यहं सञ्चि-नोति । अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ १७४ ॥ नैतं-चित्रं यदयमुदधिश्यामसीमां धरित्रीमेकः कृत्स्नां नगरपरि-घप्रांशुबाहुर्भुनक्ति । आशंसन्त समितिषु सुराः सक्तवैरा हि दैत्यैरस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ १७५ ॥ नातु लोकानित्र परिणतः कायवानस्त्रवेदः क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोषस्य गुप्त्यै । सामर्थ्यानामिव समुदयः संचयो वा गुणानामाविर्भूय स्थित इव जगत्पुण्यनिर्माण-राशिः ॥ १७६ ॥ हेपन्ते यजितजलधरध्वानमेते तुरगा भूमिं पादैर्यदपि च मुहुर्दक्षिणैरालिखन्ति । यानौत्सुक्यं यदपि चलनाद्वालवेव्यञ्जयन्ति त्वद्दोर्दण्डद्वितयशरगा तत्समग्रा जयश्री ॥ १७७ ॥ दृष्टः साक्षादसुरविजयी नान्यिना चक्रवर्ती मात्स्यो न्यायः कथयति यथा वारुणी दण्डनीतः । पातालेन्द्रादहिमयमयास्त्यैव नित्यानुषक्तं तत्र पुण्यैरजनि भवता वीर राजन्वती भूः ॥ १७८ ॥ यत्कीर्त्या धवलीकृतं त्रिभुवनं मूर्त्या जगन्मोहितं भवयैश परितोषितं सुचरितरानन्दिता सज्जना । पूर्णाशा बहवः कृता वितरणैर्येन त्वया याचकास्तस्मै सन्गुणाश्रयाय भवते दीर्घायुराशास्महे ॥ १७९ ॥ दाने कल्पतरुर्नये सुरगुरुः काव्ये कविस्तेजसि प्रौढग्रीष्मरविर्धने धनपतिः सत्ये दयायां शिबिः । गाम्भीर्ये सरितांपतिर्निरुपमे शौर्ये सुभद्रापतिः श्रीमान्धर्मरतिर्महीपतिरयं जीयात्सहस्रं समाः ॥ १८० ॥ विद्वन्मानसहंस वैरिकमलासंकोचचन्द्रद्युते दुर्गामार्गण-नीललोहित समिरन्वीकारवैश्वानर । सत्यप्रीतिविधानदक्ष विजयप्राग्भारभीम प्रभो साम्राज्यं वरवीर वत्सरशतं वैरि-श्रमुच्चैः क्रियाः ॥ १८१ ॥ हस्तन्यस्तकुशोदके त्वयि न भूः सर्वसहा वेपते देवागारतया स काञ्चनगिरिश्चित्ते न धत्ते भयम् । अज्ञातद्विपभिक्षभिक्षुकुलावस्थानदुःस्थाशया वेपन्ते मददन्तिनः परममी भूमीपते तावकाः ॥ १८२ ॥ अर्थिभ्रंशर्वहूभवत्फलभरव्याजेन कुब्जायितः सत्यास्वितिं-दानभाजि कथमप्यास्तां स कल्पद्रुमः । आम्बे निर्व्ययरत्न-संपदुदयोदग्रः कथं याचकश्रेणीगर्जनदुर्यशोनिविडितव्रीडस्तु रत्नाचलः ॥ १८३ ॥ देव त्वत्करनीरदे दिशि दिशि प्रारब्ध-पुण्योन्नतौ चञ्चत्कङ्कणरत्नकान्तितडिति स्वर्णामृतं वर्षति । स्फीता कीर्तितरंगिणी सममभूत्तृष्णा गुणग्रामभूः पूर्णं चार्थि-सरः शशाम विदुषां दारिद्र्यदावानलः ॥ १८४ ॥ देव त्वामस-मानदाननिहितैरर्थैः कृतार्थीकृतत्रैलोक्यः फलभारमङ्कुरगिरः कल्पद्रुमो निन्दति । टङ्कच्छेदनवेदनाविरमणात्सञ्जातसौ-ख्यस्थितिः प्राचीनत्वगणितान्नरोहणतया श्रीरोहणः स्तौति च ॥१८५॥ गण्डौ पाण्डिमसात्तनूस्तनिमसात्पश्चानली वाष्प-सात्कीरः पञ्जरसान्मनोऽपि हरसात्कण्ठोऽपि कैवल्यसात् । आसन्देव चमूवरेण्य भवतः प्रत्यर्थिवामभ्रुवां कोदण्डे परिवेषभाजि विजयश्रीसाधने योधने ॥ १८६ ॥ देव त्वं मलयाचलोऽसि भवतः श्रीखण्डशाखी भुजस्तस्मिन्काल-भुजगमो निवसति स्फूर्जत्कृपाणच्छलात् । एष स्वाङ्गमर्न-गलं रिपुतुरङ्गस्कन्धेषु सघट्टयन्दीर्घव्योमविसारि निर्मलयशो निर्मोकमुन्मुञ्चति ॥ १८७ ॥ कर्पूरप्रतिपन्थिनो हिमगिरि-ग्रावाग्रसघर्षिणः क्षीराम्भोनिधिमध्यगर्भजयिनो गङ्गाघसर्वं-कषाः । स्वच्छन्दं हरिचन्दनद्युतिनुदः कुन्देन्दुसंवादिनस्त-स्यासन्नरविन्दकन्दरुचयोऽनेके गुणाः केवन ॥ १८८ ॥ मन्ये स्वर्णमणिं तवैनमतुलं पाणिं द्विजाभ्यर्चने दुर्वर्णान्यपि भिक्षुभालफलकान्यासन्सुवर्णानि यत् । तच्चित्रं परमत्र मित्र भवता दत्ता सहस्रादिमा दुर्वर्णा न सुवर्णतामुपगता क्षुद्रास्तु मुद्रा कथम् ॥ १८९ ॥ सततश्रमहारिशीतलतले पुण्याश्रमालंकृतावुद्यद्दानदवानलेन कलिते विद्वत्तरूणां चये । सद्यो वप सुवर्णवारिद विभो स्वर्णाम्बुधारास्ततो विश्व-व्यापियशः शिरोऽवनिसृतामाक्रम्य नन्दानिशम् ॥ १९० ॥ इन्दुस्त्वद्यशसां जितोऽजनि परं भासानिविस्तेजसां कन्दर्पो वपुषा सुधाजलनिधिर्गम्भीरचोविलासेन च । तत्र ते जयशील-

---

१ लोकालोकपर्वतपर्यन्तम् २ दिवसस्य ३ षष्ठे ४ साक्षात् ५ पुच्छस्य ६ 'कुं'धातोर्लिङ् ७ अर्थभवेन ८ व्ययामावाद्रुपची यमानस्य ९ कल्पवृक्षेति भावः १० दानशौण्ड

---

१ लज्जासंवरणोपायाभावः सूचित इति भावः २ पानीयम् ३ चल मत्स्यबुद्धिं प्राप्ताः ४ गुणसमूहभूमिः ५ अनुपमदानाय न्यस्तैः सुवर्णादिभिः ६ यतस्त्वया दानेन सर्वे याचकाः सफलीकृता अतस्तत्फलानां गृहयालवः केऽपि च नायमिति भावः ७ खनिः ८ निर्वणतया ९ पर्वतः १० यतस्तस्य सर्वेषां सरलतया स्वार्थे नोऽस्माकमपि भेक्ष्यति विदार्यते इति भावः ११ सेनाप्रधान १२ परि वेषो मण्डलीकरणं धनुषस्तु भवतः सेवकेऽस्मिन् परिवेषभाजि सिद्धाचे सति कदाचित्मावर्षणेन कुण्ठलता प्राप्ते सतीत्यर्थः १३ त्वं १४ चन्दनवृक्ष १५ खड्ग- १६ सघट्टयन् १७ रिपुमस्तकेष्विति यावत् १८ कञ्चुकम् १९ यथा कश्चन सर्पस्तरस्क्रन्धे संघट्टन कुर्वन्स्वं कञ्चुकं परित्यजति तथा त्वत्कृपाणोऽपि शत्रुतरस्कन्धेषु संघृष्य यशः कञ्चुकं मुञ्चतीति भावः

वर्त्म सरेत् ॥ २१० ॥ आलान जयकुञ्जरस्य दृषदा सेतुर्विपद्वारिधे पूर्वाद्रि करवालचण्डमहसो लीलोपधान श्रिय । सग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो राजन्राजति वैरिराजवनितावैधव्यदस्ते भुज ॥ २११ ॥ त्वय्यौकसि सप्रतापगरिमण्यमेसरे त्यागिना देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा । इन्दु किं घटित किमेष विहित पूषा किमुत्पादित चिन्तारत्नमहो मुधैव किममी सृष्टा कुलक्ष्माभृत ॥ २१२ ॥ नानाभूषणभूषित प्रतिमयापार प्रभूता स्थितिर्मारासक्तकरो भवाधिकरुचिर्भूरी कृताश्वद्विप । शश्वत्सगतभासमानमुकुटो भिक्षुप्रवृद्धादरस्त्व राजेन्द्र रिपुस्तवापि नितरा भेद पर भेदकृत् ॥ २१३ ॥ प्रत्यावासकमज्जता प्रथमतस्त्वा योद्धुमुत्कण्ठिता योधास्तेऽभिसृता मनागरिचमू स्वाधीननाथा स्थिता । भीत्या प्रोषितभर्तृका समभवत्तत्सायकै खण्डिता दूरादन्तरिता विधाय कलह हा विप्रलब्धा विधे ॥ २१४ ॥ प्रामाण्य स्वत एव नैव परतो विज्ञायते मानता शब्दस्यापि यथार्थता स्तुतिवचोराशेर्मनोवृत्तय । विश्वव्यापकता गतो न च महानन्यो भ्रम क्वापि ते नास्ते देव मत किमस्ति भवत शास्त्रेषु न ज्ञायते ॥ २१५ ॥ प्रामाण्य परत स्वतोऽपि भवतो विज्ञायते सन्मते भूमीन्द्र प्रचुरक्षणस्थिरतया वर्णाश्चिर स्थापिता । सर्वैकैकसदीश्वरोऽपि न पर ब्रूते भवानीश्वर तनैयायिकनायकस्य भवतो मीमासकत्व कुत ॥ २१६ ॥ एक वस्तु यदस्ति विश्वजनतानन्दप्रमोदात्मक सत्य तत्त्वमसीति वाक्यमखिल त्वय्येव विश्राम्यति । त्वामाकर्ण्य न किंचिदन्यदवनीशृङ्गार भो मन्यते त्वय्यास्ते जनकादिकीर्तिजनके किं ज्ञानमीमासया ॥ २१७ ॥ खड्गाणेषु यमो जयेषु नियम पाते स्थिर चासन भ्रान्तौ श्वासविनिग्रहो गुणगणे प्रत्याहृति श्रीमत । ध्यान शूलिनि धारणा च धरणेर्धर्मे समाधिर्यतस्त्वन्निर्विण्णहृद किमीश्वरपरे वाञ्छन्ति पातञ्जले ॥ २१८ ॥ दृष्टा तो न तवास्ति वाचि न च ते सदेहलेश क्वचिद्याजोक्तिर्न कदापि शास्त्रकलने नैवानुमाने रुचि । सामान्य च विशेषवन्न मनुषे नाक्षेपबुद्धिमनाग्व्याघातोऽपि न वा मुखेऽप्यथ कथ साहित्यतर्कज्ञता ॥ २१९ ॥ मेघो भाति जलेन गौस्तु पयसा विद्वन्मुख भाषया तारुण्येन च कामिनी मधुरया वाण्या पिक स्व जलात् । मालिन्यान्नयन श्रिया च सदन ताम्बूलरागान्मुख ब्रह्माण्ड सकल त्वया नरपते भाति स्म चित्र महत् ॥ २२० ॥ दारिद्र्योपहतो यथा घनधन चान्द्रीं चकोर प्रभा कामार्तस्तरुणी क्षुधापरिगत सद्व्यञ्जन भोजनम् । सच्छिष्य सुगुरु वियोगविधुरो वत्सो यथा मातर तद्वद्व सतत स्मरामि मनसा मद्वत्सलाञ्श्रीमत ॥ २२१ ॥ लक्ष्मीस्ते सदने सदा विहरता वित्त च चिन्तामणि स्वर्धेनुस्तव गोकुले सुरतरुश्चारामभूमौ तव । वाणी ते वदने दया नयनयोर्दान करे चान्वह विष्णुश्चेतसि ते मतिश्च वसता कीर्तिश्च लोकत्रये ॥ २२२ ॥ गङ्गायत्यसितापगा फणिगण शेषीयति श्रीपति श्रीकण्ठीयति कैरवीयति कुल नीलोत्पलाना च वै । कर्पूरीयति कज्जल पिककुल लीलामरालीयति स्वकुम्भीयति कुम्भिनामपि घटा त्वत्कीर्तिसघट्टत ॥ २२३ ॥ लक्ष्मीस्ते हृदि भारती च वदने मौलौ सदा केशवश्चण्डी ते भुजदण्डयोर्गुणनिधे गेहे कुबेरस्थिति । चित्त नाथ तवास्तु धर्मसदने दानप्रसङ्ग करे सर्वास्ते विपद प्रयान्तु विपिने त्व दीर्घजीवी भव ॥ २२४ ॥ आयुस्ते नरवीर वर्धतु सदा हेमन्तरात्रिर्यथा लोकाना प्रियवर्धनो भव सदा हेमन्तसूर्यो यथा । लोकाना भयवर्धनो भव सदा हेमन्ततोय यथा नाश यान्तु तवारयोऽपि सतत हेमन्तपद्म यथा ॥ २२५ ॥ यद्बाहू वहत पराक्रमहतप्रत्यर्थिसीमन्तिनीचक्षु कज्जलकालिमामिव धनुर्मौर्वीकिण श्यामिकाम् । यद्दोर्दुर्मदकर्मकार्मुकगुणप्रोत्तालकोलाहलैर्वैरिस्त्रीकलमेखलाकलकला पीता इवास्त गता ॥ २२६ ॥ सौन्दर्य मदनादपि प्रथयति प्रौढिप्रकर्ष पुरा भेत्तार मदनारिमप्यधरयत्युद्दामदो क्रीडितम् । मुग्धत्व मदनारिमौलिशशिनोऽप्युत्कर्षमालम्बते मूर्तस्तत्किमसौ रसैर्विरचित शृङ्गारवीराद्भुतै ॥ २२७ ॥ आदाय प्रतिपक्षकीर्तिनिवहा ब्रह्माण्डभूषान्तरे निर्विभ्रम धमता नितान्तमुदिते त्वत्तेजसा तेनोष्मिमि । तत्तादृक्पुटपाकशोधितमित्र प्राप्त गुणोत्कर्षिणा पिण्डस्थ च महत्तर च भवता नि सारतार यश ॥ २२८ ॥ व्यासो नैकतयास्थित श्रुतिगण जैमी न वल्मीकतो नामो नैभवमच्युतस्य सुमहद्भाष्य च नोभाषिषम् । चिनार्यो न

१ बन्धनस्तम्भ २ अनेनास्य सेनोरविनश्वरत्व सूचितम् ३ उदयाचल ४ सूर्य ५ विलोडनलीला ६ यथा क्षीराब्धिमन्थने मन्दराचलस्तथा सग्रामामृतसागरविलोडने खड्ग यथा च तत्रामृतमुत्पन्न तथात्र यश इति भाव ७ यतस्त्वमेव विमलसकललावण्यगृहमत स्तत्पुर सकलङ्कस्य चन्द्रस्य लावण्यमयत्वेन घटन व्यर्थमेवेति भाव ८ यत पूषा स्वप्रतापगरिमलवांशमपि नाप्नोतीति भाव ९ यतश्चिन्तारत्नस्याय प्रभावो यद्याचकयाचितार्थाना सद्य एव पूरण भवति तच्च त्वत्त एव भवतीति अनर्थिताम्प्युत्पत्तिर्वृथैवेति भाव १० यत पृथ्वीभारस्त्वया भुजाभ्यामेव धारितोऽतस्तदुत्पत्तिर्व्यर्थेति भाव-

१ अनेकशाखारूपेण न विस्तारितवान्, तत्त्वतो व्यासो नाभवमित्यर्थ- २ वेदसमूहम् ३ नाह वाल्मीकिरित्यर्थ ४ नाह चतुर्मुख इत्यर्थ ५ नाह सहस्रजिह्व इत्यर्थ

रेहत्कथामचकथ सुरनाम्नि नास गुरुर्देव त्वद्गुणवृन्दवर्णनमह कर्तुं कथ शक्नुयाम् ॥ २२९ ॥ एकाभूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुङ्खावली जेतुर्मङ्गलपालिकेव पुलकस्या कपोलस्थली । लोलाक्षी क्षणमात्रभाविविरहक्लेशासहा पश्यतो द्रागाकर्णयतश्च वीर भवत प्रौढाहवाडम्बरम् ॥ २३० ॥ येषा दोर्बलमेव दुर्बलतया ते समतास्तैरपि प्राय केवलनीतिरीतिशरणै कार्यं किमुर्वीश्वरै । ये क्ष्माशक्र पुन पराक्रमनयस्वीकारकान्तक्रमास्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्रा पवित्रा परम् ॥ २३१ ॥ अत्युच्चा परित स्फुरन्ति गिरय स्फारास्तथाम्भोधयस्तानेतानपि विभ्रती किमपि न क्लान्तासि तुभ्य नम । आश्चर्येण मुहुर्मुहु स्तुतिमिति प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमा स्मृतस्तव भुजो वाचस्ततो मुद्रिता ॥ २३२ ॥ येषा कण्ठपरिग्रहप्रणयिता सप्राप्य धाराधरस्तीक्ष्ण, सोऽप्यनुरज्यते च कमपि स्नेह परामोति च । तेषा सगररङ्गसक्तमनसा राज्ञा त्वया भूपते पासूना पटले प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ २३३ ॥ द्वेष्या कीर्तिकलिन्दशैलसुतया नद्यास यद्दोर्द्वयीकीर्तिश्रेणिमयी समागममगाद्गङ्गा रणप्राङ्गणे । तत्तस्त्रिविनिमज्जय बाहुज भटैरम्भि रम्भापरीरम्भानदनिकेतनन्दनवनक्रीडाडाडम्बर ॥ २३४ ॥ अस्मिन्दिग्विजयोद्यते पतिरय मे स्तादिति ध्यायति कम्प सात्त्विकभावमञ्चति रिपुक्षोणीन्द्रदारा धरा । अस्यैवाभिमुख निपत्य समरे यास्यन्त्यरूर्ध्वं निज पन्था भोत्स्यति दृश्यते बिलमय प्रत्यर्थिभि पार्थिवै ॥२३५॥ विद्राणे रणचत्वरादरिगणे त्रस्ते समस्ते पुन कोपात्कोऽपि निवर्तते यदि भट धीर्या जैत्रयुद्धट । आगच्छन्नपि सम्मुख विमुखतामेवाधिगच्छत्यसौ द्रागेतच्छुरिकारयेण ठणिति च्छिन्नापसर्पच्छिरा ॥ २३६ ॥ हित्वा दैत्यरिपोरुर स्मरमन ध्रुत्यत्नदोषस्फुटासीदन्मर्कटकीटकृन्निमिसितच्छन्नीमवत्कौस्तुभम् । उज्झित्वा निजसद्म पद्ममपि तेद्व्यक्ताव नद्वीकृत लूतातन्तुभिरन्तरद्य भुजयो श्रीरस्य विश्राम्यति ॥ २३७ ॥ सिन्धोर्जैत्रमेय पवित्रमसृजत्तत्कीर्तिपूर्ताद्भुत यत्र स्नान्ति जगन्ति सन्ति कतय के वा न वैचयमा । यद्विन्दुश्रियमिन्दुरश्नुते जल चाविश्य दृश्येतरो यस्यासौ जलदेवतास्फटिकभूर्जागर्ति यागेश्वर ॥ २३८ ॥ युद्धा चाभिमुख रणस्य चरणस्तैर्नादसीयस्य वा बुद्धान्ति स्वपरान्तर निपततामुन्मुच्य बाणावली । छिन्न वार्वनतीभवन्निजभिय खिन्न भरेणाथवा राज्ञानेन हठाद्विलोठितमभूद्भूमावरीणा शिर ॥ २३९ ॥ राज्ञामस्य शतेन किं कल्पतो हेतिं शतघ्नीं कृत लक्षैर्लक्षभिदो दृशैव जयत पेद्मानि पक्षैरलम् । कर्तुं सर्वपरैस्छिद्र किमपि नो शक्य परैर्धेन वा तरसैवोपगम विनास्ति न गति काचिद्वतैतद्द्विषाम् ॥ २४० ॥ क्षीरोदन्वदप प्रमथ्य मथितां देशेऽमरैर्निर्मिते स्तोत्रम्य सृजतस्तदस्य यशस क्षीरोदसिंहासनम् । येषा नाजनि वा जनेन *जगतामेतत्कविस्तामृतस्रोत प्रोतपिपासुकर्णकलशीभा* जाभिषेकोत्सव ॥ २४१ ॥ निस्त्रिंशैस्त्रुटितारिवारणघटाकुम्भास्थिकूटान्तरैस्थानस्थैर्युक्तमौक्तिकोत्करैरकिर कैरस्य नाथ कर । उन्नीतश्चतुरङ्गसैन्यसमरत्वङ्गत्तरङ्गैर्धुरक्षुण्णासु क्षितिपु क्षिप्तं बिव यश क्षोणीजैबीजव्रजम् ॥ २४२ ॥ यत्कस्यामपि मौनुमात्र ककुभि स्थैर्येमनमालम्बते जात यद्वनमाननैक शरणप्राप्तेन दावाग्निना । एषैतद्भुजतेजसा निर्जितयोस्तावत्त योरौचिती धिक्त वौडनमम्भसि द्विषि भिया येन प्रविष्ट पुन ॥ २४३ ॥ आत्मन्यस्य समुचितीकृतगुणस्याहोतरामौचिती यद्वात्रान्तरवर्जनौदजनयद्भुजानिरेव द्विषाम् । भूयोऽहक्रियते स येन च हृदा स्कन्धो न यश्चानमत्तं मर्माणि दैल्दल समिर्देलकमाणबाणव्रज ॥ २४४ ॥ यद्वन्तु कुरु तेऽभिषेर्णनमय शक्रो भुन सा भुव दिग्दाहैरिव भस्मभि र्मघवता सृष्टैर्धृतोद्धूलना । शर्मोर्मा बत साप्यत्रेलनटन भाजि व्रत द्रागिति क्षोणी नृत्यति मूर्तिरष्टवपुषोऽसृग्वृष्टिसध्याधिया ॥ २४५ ॥ प्रागेतद्वपुराशुखेन्दु सृजत सद्दु समग्रस्त्विषा कोष शोषमगादगाधजगतीशिल्पेऽप्यनल्पा-

१ नाह गुणाढ्य इत्यर्थ २ इन्द्रे ३ नाह वाचस्पतिरित्यर्थ ४ विस्तीर्णा ५ स्वरम् ६ तेजआदि, पक्ष,-मित्रत्वम् ७ यमुनया ८ क्षत्रियभटै ९ एतद्विरोधिना मरणमेव शरणमिति भाव १० औत्पातिके भूकम्पे सात्त्विकोऽपेक्षा ११ प्राप्नोति १२ कम्प ‍लोहम् १३ आसन्नमृत्योरादित्यमण्डल सच्छिद्रमिव दृश्यते १४ सूर्यमण्डले १५ रणाङ्गणात् १६ प्रसिद्ध १७ पराङ्मुखत्वम्, पक्षे,-विगतमुखत्वम् १८ ठणिति कश्चिदनुकरणशब्द १९ विष्णो २० रिक्तावरोध २१ तन्तुवायकीटा २२ वक्षम् २३ लक्ष्मी २४ सेतु बबन्धीत्यम्, ततोऽप्यधिकमित्यर्थ २५ खातम् २६ सर्वेऽपि कवयो मौनिनो भवन्ति, वर्णयितुमशक्यत्वादिति भाव

१ सावर्ण्यादद्वय २ इन्दु ३ शिवलिङ्ग ४ अमुष्य ५ नश्नोभवत् ६ भारेण ७ परिवर्तितम् ८ आयुधम् ९ अश्वम् १० लक्षसंख्या, पक्षे,-शरव्यम् ११ पद्मसंख्यया, पक्षे-अब्जानि १२ पद्मसंख्याभि १३ शत्रुच्छिद्र १४ परापरत यथा, पक्षे,-परेषामरीणामर्धेन १५ पकस्वादि, पक्षे,-युद्धम् १६ विलोक्य १७ मथनोद्भूतो निर्जलो दधिक्षीरविकार १८ रूपा तर, रूपा तरापादनेन क्षीराब्धावभाव गमिते सतीत्यर्थ १९ स्वेनाक्रमणार्थम् २० पूरिते २१ खड्ग २२ संघात २३ गर्वप्रदेश २४ स्थायिन २५ समूह २६ उत्प्रेक्षित २७ संचरत् २८ कृष्टासु २९ वपनिव ३० शृङ्ग ३१ सूर्य ३२ स्थिरत्वम् ३३ औचित्यम् ३४ अत्रोजलम् सहजद्वैरि तस्मिन्, ३५ समाहतगुणस्य ३६ दण्डनमकरोदित्यर्थ ३७ दग्धरिवा ३८ अमोघबाण इत्यर्थ ३९ सेनयाभियानम् ४० धूनमस्तानुलेपना ४१ मा भमभि

थित । नि शेपश्रुतिमण्डलव्ययनशोदीपञ्जमैरेप धा शेप केशमय त्रिमन्वतमसस्तोमेस्तो निर्मित ॥ २४६ ॥ असारिप्रकर शरश्च नृपते सव्ये पतन्तावुभौ सीत्कारं च न समुखौ रचयत कॅम्प च न प्रामुत । तद्युक्त न पुन र्निवृत्तिरुभयोर्जागर्ति यन्मुक्तयोरेकस्तत्र भिनत्ति मित्रमपर श्वामित्रमित्यद्भुतम् ॥ २४७ ॥ एतस्योन्नतसर्वकर्मकृति-नखैलोक्यचूडामणे शम्भुब्रह्मपुरदरप्रभृतय स्तुत्यै न शक्ता यदि । देव पन्नगनायको भगवती वाणी स्वय चेज्जडा सौन्दर्यस्य निरूपणे वद कथ शक्तो भवेन्मा नव ॥ २४८ ॥ अर्धं दानवनैरिणा गिरिजयाप्यर्धं हरस्याहृत देवेत्थ भुवनत्रये स्मरहराभावे समुन्मीलति । गङ्गा सागरमम्बर शशिकला शेपश्च पृथ्वीतल सर्वज्ञत्वमधीश्वरत्वमगमत्त्वा मा च भिक्षाटनम् ॥ २४९ ॥ अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा समारा खलु तेऽन्य एव विधिना यैरेप सृष्टो युवा । श्रीमत्कान्ति जुपा द्विपा करतलात्स्त्रीणा नितम्बस्थलाद्दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥ २५० ॥ यैर्दृष्टोऽसि तदा ललाटपतितप्रासप्रहारो युधि स्फीतासृक्स्रुतिपाटलीकृतपु रोभाग परान्दारयन् । तेपा दु सदकामदेहदहनप्रोद्धूतनेत्रा श्रल नालालीभरभासुरे पुररिपावस्त गत कौतुकम् ॥ २५१ ॥ येऽणुत्व मनसि स्वके विवृणुते रीत्या कयापि स्फुट काणा दाचरणस्य तत्समुचित मन्ये प्रतिक्ष्माभृताम् । न्यायाभिज्ञतमोऽपि यत्प्रथयसे चित्ते महत्त्व निजे मीमासामतपक्ष पातत इद मन्ये त्वयाङ्गीकृतम् ॥ २५२ ॥ ये लब्धाश्रय-मायत फलभूत कुर्वन्ति किंचिद्गुण वार्धौ वारिमुचो न कस्य विदितास्ते कर्ममीमासका । आलोच्यैव निराश्रया फलमैरे सवन्धत सद्गुणाञ्श्रीमद्राम तवाद्भुत पुनरिद मीमासकत्व स्तुम ॥ २५३ ॥ त्रैलोक्याभयलम्भकेन भवता वीरेण निस्सारित सज्जीभूतमुहूर्तमण्डलधनु पाण्डित्यमाखण्डल । किं चाजस्रमखार्पितेन हविपा सफुल्लमासोल्लसत्सर्वाङ्गीणवलीविलुसनयनव्यूह कथ वर्तते ॥ २५४ ॥ कल्पक्षोणिरुहोऽयमित्यनुदिन भूमीसुरैर्भाव्यसे कामोऽसाविति कामिनीभिरभितश्चित्ते चिर चिन्त्यसे । श्रीनारायण एव केवलमिति प्रेम्णा श्रिया ध्यायसे त्व कालोऽयमिति प्रतिक्षितिधरैरेकोऽप्यनेकात्मभृत् ॥ २५५ ॥ नीतिस्त्रीमुकुरो जयध्वजनवस्तम्भ प्रतापाशुमत्पूर्वा दिक्परिपन्थिभूपति-महासपन्मृगीवागुरा । उद्यत्पुण्यलतालवालमतनूमत्ताद्विपालानक य श्रीकेलिनिकेतन गुणमणिश्रेणी नवीनाकर ॥२५६॥ रत्नान्यम्बुधितोयगर्भमगमन्मेरु सुराञ्शिश्रिये स्वीयाङ्के कमला निधाय विदधे निद्रा हरिर्वारिधौ । यस्मिन्दित्सति भूरि दातरि नृणा भालस्थले दुर्लिपि व्रीडानम्रशिरा कमण्डलुमय जग्राह मार्ष्टुं विधि ॥ २५७ ॥ लक्ष्मीश्चेन्न सरस्वती तदुभय यद्यस्ति नोदारता सा चैतत्त्रितय भवेच्च शुहचित्सुण्यैरगण्यैरपि । सौजन्य न विजृम्भते तदपि चेत्तास्तेऽनुकूला मतिस्तत्सर्व परमेश्वरस्य कृपया त्वय्येव सभाव्यते ॥ २५८ ॥ शत्रूणा यमदण्डता मृगदृशा कन्दर्पकोदण्डता गीर्वाणद्रुमभानमर्थिविद्गुपा मध्ये त्रयाणामिति । आश्चर्यं मनुजेन्द्ररत्न भवतो यद्बाहुदण्डद्वय नानात्व गतमेकमेव जगता मध्ये त्रयाणामिति ॥२५९॥ रक्तेनैव विलोचनेन करुणारत्नाकरेण त्वया दृश्यन्ते नरदेवरत्न सुहृदा विद्वेपिणो नो नृपा । किं सिक्ता प्रथम सुधाभिरनन्दानानलै किं परे पूर्वं पल्लविता कुत किमपरे भस्मत्वमासादितम् ॥ २६० ॥ या लाक्षावलयानि बाहुयुगले कण्ठे च काचस्रज मन्यन्ते बहुभूपणानि वनिता दीनद्विजाना पुरा । ता माणिक्य-चितानि हेमवलयान्युज्झन्ति मुक्तास्रज यद्द्वाराद्बहुदानशील नृपते त्वत्त्यागलीलायितम् ॥ २६१ ॥ मेरुर्दूरगतो हिमालयगिरि प्रालेयरूपोऽभवच्चन्द्रे श्रीसहजेऽपि याचकभयात्क्षीणत्वमुन्मीलति । कौपीन कृतवान्हरोऽपि भगवान्विष्णुर्जल सेवते वारा राशिरपेयतामुपगत को नाम दातु क्षम ॥ २६२ ॥ कल्याण भवता यश प्रसरता धर्म सदा वर्धता सपत्ति प्रथता प्रजा प्रणमता शत्रुक्षयो जायताम् । वाक्य सवदता वपु प्रभवता लक्ष्मीपति प्रीयता मायुस्ते शरदा शत विजयता दानाय दीर्घायुपे ॥ २६३ ॥ दृष्ट्वैवाङ्कुशमुद्रया निगडितो दारिद्र्यदन्तावलो वाचा सुदत्याचेया मम कृतो गङ्गावगाहोत्सव । अभ्युत्थाननमस्क्रियार्धघटनैर्मानोऽपि दानोत्तरो लीलेय भवता वय तु विदुपा मूर्धानमध्यासिता ॥ २६४ ॥ पद्मा सद्मनि वेशवस्य गहने रत्नानि रत्नाकर हेमाद्रिर्हिमसानुना व्यवहित स्वर्गे सुराणा तरु । जम्बुद्वीपधरासु भूमिपतयो जाम्बूनदैर्दुर्मदास्त्व तावत्सकलाश्रयेऽसि सुलभो भाग्यैर्द्विजानामिह ॥ २६५ ॥ राजन्नभ्युदयोऽस्तु जीव शरदा साग्र शत तेऽरयो रोगैर्यान्तु लय यश शशधर काष्ठासु देदीप्यताम् । शिष्टान्पाहि बुधालय प्रणतिभिर्देहार्थिना स सदा

१ मुक्तै २ युगपद् ३ दु खाभावात्; पक्षे,–निगलभावात् ४ भयाभावात्, पक्षे,–दुष्प्रयोगाभावात् ५ भगमादिति भाव, पक्षे,–मन्यशादिति भाव ६ संसारादित्यर्थ, पक्षे,–चापादित्यर्थ ७ सर्वम्; पक्षे,–यथाक्रमम् ८ हरिणा हरिहरात्मकस्यैकस्य विग्रहस्य प्रसिद्धे ९ प्रकाशमाने १० पर्वतविशेष

१ आलानक गजबन्धनस्तम्भ २ दयासागरेण

वाणी ते वदने रमा प्रतिदिनं गेहे भुजे त्वाज्यं ॥ २६६ ॥ भ्रश्यच्छ्रुतिमस्तकं प्रविगलत्सद्वर्णविप्रस्थितिर्नश्यत्साङ्गबलं प्रनष्टवचनप्राग्भावपूर्णस्मृति । वृद्धोऽत्यन्तमयं स्वयं कलिमहाम्लेच्छेन निर्मूलितो धर्मः संप्रति चाल्यते तव करालम्बेन भूमीपते ॥ २६७ ॥ बन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यतां प्रेयसां क्लिश्यन्ति प्रणयन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः । अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारानिधे विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयते ॥ २६८ ॥ हित्वा त्वामुपरोधशून्यमनसा मन्ये न मौलिः परो लज्जावर्जनमन्तरेण न रमामन्यत्र संदृश्यते । यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥ २६९ ॥ धर्मं पालय नन्दय द्विजगणान्धाम समाराधय प्रत्यर्थिक्षितिपालभूरुहवनं निर्मूलमुन्मूलय । कान्ताचित्तसरोजसौभगवने भृङ्गत्वमासादय स्फीतां कीर्तिमशेषलोकजयिनीमाकल्पमाकल्पय ॥ २७० ॥ ऐश्वर्यं नहुषस्य शम्भुविषयश्रद्धा दशास्यस्य सा शौर्यं श्रीरघुनायकस्य सहजं गाम्भीर्यमम्भोनिधेः । दातृत्वं बलिकर्णयोरिह जगत्येकत्र चेत्स्यात्तदा श्रीवीरक्षितिपालमौलिनृपते साम्यं कथंचिद्भवेत् ॥ २७१ ॥ भिक्षुद्वारि सदानवारिमधुपश्रेणीमिभान्द्रभ्रमाद्दत्ते यत्तृनधूर्वधूकरतलं शोणाम्बुजाशङ्कया । सैनान्वेति पलायितेति चकिता हस्ताग्रमाधुन्वती मुग्धा वीरमहीपते तदखिलं त्वद्दानलीलायितम् ॥ २७२ ॥ श्रीवीर क्षितिपाल ते सुललितं दानोद्यमे यद्वच क्वास्ते सर्वहिरण्यमित्युदभवत्तत्कालमाकर्ण्य तत् । तापं प्राप हिरण्यरेतसि जनिं जाड्यं हिरण्याचले खेदाम्भोऽपि हिरण्यगर्भवपुषि स्वापाय सन्नासत ॥ २७३ ॥ राजानः शशिभास्वरान्वयभुवः के के न संजज्ञिरे भर्तारं पुनरेकमेव हि भुवस्त्वां वीर मन्यामहे । येनाङ्गं परिमृद्य कुन्तलमथाकृष्य व्युदस्यायतं चोलं प्राप्य च मध्यदेशमसकृत्काञ्च्या करः प्रापितः ॥ २७४ ॥ ख्याते वैभवमस्ति नैव परतः प्रामाण्यनिर्धारणं नैवातद्वति तत्प्रकारकमतिर्नैवोपमानं तव । त्वद्देशेषु विभाति न च्छलकथा नो वा क्वचित्संशयः श्रीवीर प्रथिता कथं पुनरियं नैयायिकत्वप्रथा ॥ २७५ ॥ वीर क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुषस्त्वत्कीर्तेस्तुलनां मृगाङ्कमलिनो धत्ते कथं चन्द्रमाः । स्यादेतत्त्वदरातिसौधशिखरप्रोद्भूतदूर्वाङ्कुरग्रासव्यग्रमतिः पतेद्यदि पुनस्तत्साङ्कशायी मृगः ॥ २७६ ॥ श्रीमद्वीर महीमहेन्द्र भवतः प्रस्थानकालोद्भवद्वादित्रध्वनिभीतभानुहरयो द्रागम्बरं प्रागमन् । तस्मिन्नेव समुपद्रवे किल विपर्यस्तं समस्तं रवेर्युग्यं सप्तरथाङ्गमेकमपदं सूतश्चिरादुक्रमः ॥ २७७ ॥ गर्वग्रन्थिलगुर्जरज्वरकरः कर्णाटकर्णाटवीदावाग्निर्द्रविडेन्द्रवीर्यदलनो गौडेन्द्रनिद्राहरः । हम्मीरप्रमदामदालसलसत्कूर्नर्तनस्तम्भनः प्रस्थाने तव वीर डिण्डिमचमत्कारः समुज्जृम्भते ॥ २७८ ॥ चिन्तागम्भीरकूपादनवरतचलद्भूरिशोकारघट्टव्याकृष्टं निःश्वसन्त्यः पृथुनयनघटीयन्त्रनिर्मुक्तधारम्[1] । नासावंशप्रणालीविषमपथपतद्बाष्पपानीयमेता देव, त्वद्वैरिनार्यः कुचकलशयुगेनान्वहं संवहन्ति ॥ २७९ ॥ त्वत्प्रारब्धप्रचण्डप्रधन[3]निर्धनितारातिवीरातिरेकक्रीडत्कीलाल[4]कुल्यावलिभिरलभत स्वैन्दमाकन्दमुर्वी[5] । दम्भोलिस्तम्भभास्वद्भुजभुजगजगद्भर्तुराभर्तुरेना तेनायं मूर्धरत्नद्युतिततिमिषतः शोभते शोणभावः[6] ॥ २८० ॥ आसीदासीमभूमीवलयमलयजालेपनेपथ्यकीर्तिः सप्ताकूपारपारीसदनजनघनोद्गीतचापप्रतापः । वीरादस्मात्परः कः पदयुगयुगपत्पातिभूपातिभूयश्चूडारत्नोडुपत्नीकर[11]परिचरणामन्दनन्दन्नखेन्दुः[12] ॥ २८१ ॥ एतेनोत्कृत्तकण्ठ[14]प्रतिसुभटनटारब्धनाट्याद्भुतानां कष्टं दृष्ट्वैव नाभूद्भुवि समरमालोकि लोकास्पदेऽपि[16] । अश्वैरश्वैरवेगैः[17] कृतसुरखुरलीमङ्क्षु[18]संक्षुद्यमानक्ष्मापृष्ठोत्तिष्ठदन्धकरणरणधुरोरेणुधारान्धकारात्[19] ॥ २८२ ॥ मन्दोद्धूतैः शिरोभिर्मणिभरगुरुभिः प्रौढरोमाञ्चदण्डस्फायन्निर्मोकसंधिप्रसरदविगलत्समदस्वेदपूराः । जिह्वायुग्माभिपूर्णाननविषमसमुद्गीर्णवर्णाभिरामं वेलाशैलाङ्कभाजो भुजगयुवतयस्त्वद्गुणानुद्गृणन्ति ॥ २८३ ॥ आ शैलेन्द्राच्छिलान्तःस्खलितसुरधुनीशीकरासारशीतादा तीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य । आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्ते चूडारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः ॥ २८४ ॥ श्रावं श्रावं त्वदीयं गुणगणमखिलं सर्वदा याचकेभ्यस्त्वत्प्रासामीप्सितेभ्यः सकलविषयजं भूपवर्गं विहाय । त्वत्तोऽहं प्राप्तुमिच्छुर्विबुधतिलकतां त्वत्समीपेऽतिदूरादायातस्त्वं शतायुर्भव कुरु च तथा येन नान्यं भजेऽहम् ॥ २८५ ॥ विद्यावन्तो विनीताः प्रसममभिसमं वाक्प्रबन्धेषु जीवाः के वा नैवारभन्ते त्रिजगति विततां कीर्तिनद्दीमतल्लीम् । तेषामाधा

१ भद्र पारदश्वा २ भक्षगि

१ अश्रा २ जलमार्ग ३ संग्राम ४ विनाश प्राप्ता ५ रुधिरनदी ६ भ्रणय ७ क्षरणम् ८ वज्रम् ९ शेषस्य १० रक्तिमा ११ समुद्रपरतीराणाम् १२ निरन्तरम् १३ अंशव, पक्षे,-हस्ता १४ छिन्नकण्ठे १५ नर्तक १६ युद्धप्रेक्षक जनान्येऽपि १७ भमन्दवेगे १८ सुरसंचारे १९ सपदि २० संचूर्ण्यमानाय

रमाव भुवनभरभृतो बिभ्रतो ये लसन्ते ते तु त्रैलोक्यतुङ्गा विमलफल्गुष स्पर्ति स्वल्पयन्ति ॥ २८६ ॥ वक्त्राम्भोज सरस्वत्यधिवसति सदा शोणे एवाधरस्ते बाहु काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्र । वाहिन्य पार्श्वमेताः सुचिरपरिचिता नैव मुञ्चन्त्यभीक्ष्ण स्वच्छेऽन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाष ॥ २८७ ॥ केचिद्बद्धा सहेल निजभवनगता मोचिता केऽपि केचिद्देहाद्देहान्तराणि क्षणमपि गमिता केऽपि नीता निबन्धम् । हत्वा हत्वा च केचित्प्रतिपदमदय प्रापिता व्यर्थभाव क्षोणीनाथस्य तस्योन्नतभुजपरिघेनारय सारयश्च ॥ २८८ ॥ उच्चै कल्याणवाही करजितनमुच सर्वदा पूर्णकामो विख्यात कर्णवृत्त्या न च वचसि कटुश्चित्रपाकानुभावी । कोषापेक्षी परस्मादुचितबहुकथस्तत्पर पुण्यलोके चित्र राजाधिराज त्वमिव तव रिपुस्तत्र कम्प्र प्रतीम ॥ २८९ ॥ उत्पत्युत्पन्नशिष्टा निविधगुणगणा यत्र यान्ति प्रतिष्ठा बाधेन प्राक्तनाना न च नियमविधिर्नापि सत्यार्थदाने । ऊह सर्वत्र यस्य स्फुरति च सकल सत्य एवार्थवादो मीमांसाभावमध्यत्यभिनवमधुना मूर्तिरेषा त्वदीया ॥२९०॥ हेलाप्रस्थानवेलाहतपृथुपृतनादुन्दुभिध्वानधाराधारावाहिप्रसङ्गादसमनृपसकृत्संभ्रमभ्रान्तचित्ता । दैवादाकुञ्चिताङ्गविगलितनयनस्यन्दमिन्दीवराक्ष्यो लीयन्ते त्वद्रिपूणा निजगृहवलभीचारुचित्राङ्गनासु ॥ २९१ ॥ श्रीकण्ठासक्त हस्तोऽधिगतमणिगण शैशवाम्यस्तविद्यो लावण्यध्वस्तकाम कविजनमिलितो यौवनाप्तप्रकाम । आदत्तक्षोणिदण्डो द्विजवशकृतधी कङ्कणाहारयुक्त स श्रीमान्वीर वीर त्वमिव तव रिपुस्तत्र मुक्तादिवर्ण ॥ २९२ ॥ लोकाना मानमात्र मनुजजनरतिस्त्व ससूदाक्षिरक्षो राशामासत्वदक्ष कृतसमयरुचिर्मण्डितो वीरवर्गै । कायलक्ष्मीनकेतु करकलितयशा कोषमानैर्विहीन श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मन्द प्रतीम ॥ २९३ ॥ वादानाशानुयुक्तो नगरकृतमतिर्यौवनाक्रा तदेह समामप्राप्तधैर्यो न विदलित रुची राजलक्ष्म्यातिहीन । नित्य दारासमस्य प्रखरतनुनिभो य सुभिक्षानुवर्ती श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मुक्तादिवर्ण ॥ २९४ ॥ श्रीवीर त्वद्रिपूणा रणशिरसि शरैर्भिन्नशीर्षाङ्गकाणा वीरावेशाद्गताना दिवमधिकरुषान्योन्यशौण्डीर्यभाजाम् । श्लेषेदिव्याङ्गनाना भुवि कचनिचयो द्राक्कटाक्षे शरासारोपुभ्रान्त्यारिवीरभ्रमकुटिलहृदामाजिरावर्तते स्म ॥ २९५ ॥

---

## विशिष्टराजप्रशंसा

### अकबर

हस्ताम्भोजालिमाला नखशशिरुचिरश्यामलच्छायवीचिस्तेजोऽम्भोधूमधारा वितरणकरिणो गण्डदानप्रणाली । वैरिश्रीवेणिदण्डो लवणिमसरसीबालशैवालवल्लीवेल्लत्यम्भोधरश्रीरकबरधरणीपालपाणौ कृपाण ॥ १ ॥ वीर त्व कार्मुक चेदकबर कलयस्युग्रटङ्कारघोष दूरे सद्य कलङ्का इव धरणिभृतो यान्ति कङ्कालशेषा । शङ्कापन्नश्च किं कारणमिति मनसा भ्रान्तिपङ्कायितेन त्यक्त्वाहङ्कारमङ्काद्विसृजति गृहिणीं किं च लङ्काधिनाथ ॥ २ ॥ कर्णाट देहि कर्णाधिकविधिविहितत्याग लाट ललाटप्रोत्तुङ्ग द्राविडं वा प्रचलभुजबलप्रौढिमागाढराढम् । प्रस्फूर्जद्गुर्जर वा दलित रिपुवधूगर्भ वैदर्भक वा गाजी राजीवदृष्टे कुशशतमथवा शाहजेलालुदीन ॥ ३ ॥ गाजीजलालुदीन क्षितिपकुलमणे द्राक्प्रयाणे प्रतीते प्रेयस प्रारभन्ते तरलतरगतिव्याकुला मङ्गलानि । नेत्राम्भ पूरपूर्णस्तनकलशमुखन्यस्तबालप्रवालात्रुट्यन्मुक्ताकलापच्युतकुचकुसुमच्छन्नाकीर्णलाजा ॥ ४ ॥

### अनङ्गभीमः

पृथ्वीश्रीमदनङ्गभीम महती तद्वेष्टन वारिधिः पीतोऽसौ कलशोद्भवेन मुनिना स व्योम्नि खद्योतवत् । तद्विष्णोर्दनुजाधिनाथजयिन पूर्णं पद नामवद्देवश्वेतसि वर्तते तव सदा त्वत्तो महान्नापर ॥ ५ ॥

### अर्जुनेन्द्र

आयातस्ते समीप तव गुणविमलान्पण्डितो वादकर्ता काव्ये भव्ये हि रवामवविगतरसे रुग्युगे रोगहर्ता । नाह जाने चिकित्सा सकलगुणनिधे दुर्दरिद्रत्वरोगे श्रीमद्राजार्जुनेन्द्र प्रबलमपि यते कल्पिता सा चिकित्सा ॥ ६ ॥

### कर्ण

मुखे हारावाप्तिर्नयनयुगले कङ्कणभरो नितम्बे पत्राली सतिलकमभूत्पाणियुगलम् । अरण्ये श्रीकर्ण त्वदरियुवतीनां विधिवशादपूर्वोऽय भूषाविधिरहह जात क्रिमधुना ॥ ७ ॥ त्व छिन्नाणि पदानि गच्छसि महीमुल्लङ्घ्य यान्ति द्विषस्त्व बाणान्दश पञ्च मुञ्चसि परे सर्वाणि शस्त्राण्यपि । ते देवीपतयस्त्वदरातिनिहतास्त्व मानुषीणा पतिर्निन्दा तेषु कथ स्तुतिस्तव कथ श्रीकर्ण निर्णीयताम् ॥ ८ ॥ लोकेश कर्ण-

---

१ वाणी, पक्षे,-नदीविशेष २ आरक्त, पक्षे,-नदविशेष ३ मुद्राभि सहित, पक्षे,-अब्धि ४ सेना, पक्षे,-नद्य ५ अन्त करणे, पक्षे,-सरोविशेषे ६ अष्टापदाख्यक्रीडनस्य गुटिका ७ ककारस्थाने पकारम् ८ इह पक्षे शत्रुपक्ष आद्या वर्णलोप ९ पद्येऽस्मिन् मकारस्थाने दकार पठनीय

१ अकबरस्यैव नामान्तरम् २ मुखे हाहा इति शब्दस्य वाप्ति ३ नयनयुगले क उदक तस्य कणास्तेषां भर ४ नितम्बे पत्राणामालि पङ्क्ति ५ तिलकवृक्षालम्बिपाणियुगलम् ६ वैरिण ७ देवाङ्गनास्वामिन-

राजाद्भुतकनकमयस्तानकीनप्रतापाद्ब्रह्माण्डानां समूहो द्रव इव भवितेत्येव समाव्य दक्षात्। तन्मापि प्लावनार्थं जलनिधिनिकर व्यर्थतामन याते देव त्वद्वैरिनारीनयननयनजैर्निर्ममे नीरधिर्न ॥९॥ श्रीकण्ठप्रौढतेजा प्रबलरिपुबलासह्यसतापदक्षो भाय श्रीमल्लनापो जगति विलसति श्रीमहाराज किंतु। मन्येऽह कौशिकेनानुरमितमहसा नूतनस्वर्गसृष्ट्युत्कृष्ट सृष्ट एष प्रखरनरवरो भास्करोऽन्यो द्वितीय ॥ १० ॥

## कर्णाटवसुधराधिप

नागा प्रभुवरकातरधिया वैवर्ण्यमावर्ण्य श्रीकर्णाटवसुधराधिपनृपानिचितानि सूक्तानि न । वर्ण्यन्ते कति नाम नाणवननीदानामिविन्ध्याटवीसध्यामारतनिर्झरप्रभृतयरतेभ्य किमात्र मया ॥ ११ ॥

## कलिङ्गेश्वर

आयुर्दानमहोत्सवस विनतक्षोणीभृता मूर्तिमान्विश्वासो नयनोत्सवो मृगदृशा कीर्ते प्रकाश पर । आनन्द कलिताकृति सुमनसा वीरश्रियो जीवित धर्मस्यैष निकेतन विजयते वीर कलिङ्गेश्वर ॥ १२ ॥ धम्मिल्ले नवमल्लिकासमुदयो हस्ते सिताम्भोरुह हार कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घन । एकोऽपि त्रिकलिङ्गभूमितिलक त्वत्कीर्तिराशिर्ययौ नानामण्डनता पुरदरपुरीवामभ्रुवा विग्रहे ॥१३॥

## कल्याणदास

कीर्तिस्वर्णतरंगिणीहिमगिरिर्निधानदीरङ्कभूर्लावण्यामृतभाजन रसिकनावलीरसालद्रुम । कान्तापाङ्गकुरङ्गस्थली तरुणनालक्ष्मीविलासाम्बुज जीयाद्विश्वविभूषण नरपति कल्याणदासाभिध ॥ १४ ॥

## कायिलेन्द्र

विस्फार्य व्योमगङ्गाबलदुरुलहरीकेतनाङ्केसरालीरर्चर्मत्सिप्कदेशे हिमकरकरधम्मिल्लडरीकूल पुच्छम्। दिङ्मागारध्वनभ्स्तव विशदयशःकेसरी कायिलेन्द्र ब्रह्माण्डारण्यवीथीगिरिगहनदरीसद्मनी बम्भ्रमीति ॥ १५ ॥ वेलामुल्लङ्घ्य हेलादलितधरणिभृद्व्याहिनीकोटिपूरैरद्वैतत्काविलेन्द्रप्रबलजलनिधि प्लावनायोज्जजृम्भे । त्वत्क्रिया मेदिनीय प्रबलभुजबलप्रौढतेज प्रहासन्ताग्रामि सततं येन दहति बडवावह्निहोनेनयेना (?) ॥ १६ ॥

## कार्तवीर्य

काष्ठानुपनात्परिवर्धमाने जामन्यनाथचलने त्वदीये । श्रीकार्तवीर्य प्रभम धनन्नि मत्स्यस्पृथ्वीपनय पनङ्गा ॥१७॥

## कुसुमेन्द्रसाहि

वार श्रीकुसुमेन्द्रसाहिनृपते मोदप्रतापो वर कन्या याचन मालवक्षितिपते साम्राज्यलक्ष्मीरियम् । तस्या वेष कर्महस्त समये तनुत्मसस्यापन कर्तुं मण्डपबन्धन विरचितु मिमा वय प्रेषिता ॥ १८ ॥

१ कुम्भोदर- २ सामन ३ वेदसूते ४ कल्पारेण

## कृष्ण

श्रीकृष्ण त्वत्प्रतापेन प्रतप्तोऽद्रिर्दिग्गजो । दिग्गजा वीजयन्त्येव कर्णताले पुन पुन ॥ १९ ॥ मन्येऽरण्ये कुम्भीगिरिगुहागह्वरे पर्यटन्ती विद्या दर्भे किमपि चरणे वासुदेवस्य कीर्ति । इन्दौ कुन्दे कुमुदकुमुले चामरे चन्दने वा दत्त्वा दत्त्वा मृदुनि पुरत पादमेषा प्रयाति ॥ २० ॥ क्षीरक्षालितपाञ्चजन्यकिरणश्रीनिर्विवेकषा श्रीकृष्णार्जुनसारथेऽसुररिपो त्व कीर्तिविस्फूर्तय । कैलासन्ति हिमाचलन्ति विकसत्कुन्दन्ति कन्दन्ति च क्षीरोदन्ति हलायुधन्ति विबुधाहारन्ति हीरन्ति च ॥ २१ ॥ त्वद्व्याहूद्भूतधूल्य करिकरनिकरै सीकराश्च प्रयुक्ता व्योम व्याप्य समन्ताद्दकुकुटमणेतन पङ्कोऽद्भुतोऽभूत्। आच्छिद्य सुरै स्मा तत्र मज्जनकृते स्फाटिकीमि शिलाभिर्बद्ध पन्थास्तदानीं सुरसरिदिति त मानवा मानयन्ति ॥ २२ ॥

## गुर्जराधीश

कालिन्दि ब्रूहि कुम्भोद्भव जलधिरहं नाम गृह्णाति कस्माच्छत्रोर्मे नर्मदाऽहं त्वमपि कथमहो मत्सपत्न्याश्च नाम । मालिन्य ब्रूहि किं ते प्रविरलविगलत्कज्जलैर्मालवीना नेत्राम्भोभि किमासीं समजनि कुपितो गुर्जराणामधीश ॥२३॥

## चोलेन्द्र

त्वत्खड्गखण्डितसपत्नविलासिनीना भूषामवन्त्यभिनवा भुवनैकवीर । नेत्रेषु कङ्कणमथोरुषु पत्रवल्ली चोलेन्द्रसिंह तिलक करपल्लवेषु ॥ २४ ॥ निद्रानिर्मलशरीरवि स्तनकलशयुगं चुम्बित चञ्चरीकैस्तत्रासोल्लासलीला किसलयमनसा धावय कीरदया । तद्धोपायालपन्त्य पिकनिनदधिया ताडिता काकलोकैरित्थ चोलेन्द्रसिंह त्वदरिमृगदृशा नाप्यरण्यं शरण्यम् ॥ २५ ॥

## जगद्देव

यत्र प्रमच्छ पान्थ कथय मम सखे नास्ति स क्वापि देशो वस्तु नो यत्र रागर्विभवति भुवि खगायेति स प्रत्युवाच । नीते मेरौ समाप्ति कनकवितरणे श्रीजगद्देवनाम्ना सूर्येऽस्तहितेऽस्मिन्क्वचिपयदिवसैर्वासरद्वैतसृष्टि ॥ २६ ॥

## जनक

ज्याघात कार्मुकस्य भवति करतल कण्ठमोंकारनादं स्तेजो भाति प्रतापाभिधमवनितले ज्योतिरात्मीयमन्त । राज्य सिंहासनश्री शममपि परम वक्ति पद्मासनश्रीर्येषां ते यूयमेते निमिकुलकुमुदानन्दचन्द्रा नरेन्द्रा ॥ २७ ॥

१ नर्मदा मदुक्तस्य च संवादोऽयम्. २ यमुनाभ्रान्त्या मदुक्ते कालिन्दीयुक्ते कोपेनाह कुम्भोद्भव नर्मदापदा उत्तरम्-'हे कुम्भोद्भव अगस्त्य त्वमे' ब्रूहि इति ३ हस्तं ४ कल्पान्त्य, पक्षे,-कन्दम् ५ धवयुक्त, पक्षे,-धवनिकरवन ६ निद्रायुक्त च अस्य, पक्षे,-ल्पान्मूषाद ७ अप्यरण्यानम्

### दलपतिरायः

चन्द्र चन्द्रार्धचूड चतुरुदधिचय चन्द्रिका चन्द्रकान्त श्रावंश्लोचनान्त चमरगृहचरीनाकिमागेश्च च गर्वीकुर्वन्ति दर्शीकरनिकरमपि ध्वलगुणाभिभीति सर्वोत्प्रस्थितास्ते दलपतिगृहिणी त्वद्यशःसोमशोभाः ॥ २८ ॥

### दशरथ

चिरादक्ष्णोर्तान्ध्य शमयति समस्तासुरवधूकृपाकृष्टिश्रीदा-प्रथमसुभगमायुरभुज । त्रिलोकीजङ्घालोज्ज्वलधवलतेजा मनुकुलप्रसूति सुनाम्णो विजयलक्ष्म्या दशरथ ॥ २९ ॥ यस्योद्यद्भुजदण्डचण्डिमभरत्कोदण्डलीलार्पितैर्निष्पीते दनु-जेन्द्रनन्दवदनाम्बुरुहीनिश्रमे । लक्ष्मीमस्तनिपाटलक्षतमयी मालम्बते केवल पीठोर्मीरङ्गाङ्कुरव्यतिकरादारण्यलीय वपु ॥ ३० ॥

### दिल्लीन्द्रचूडामणि

राजेति क्षणदाकर विजयते दासोकलक्ष्मीरिति स्वर्गाग वहुनादिनीपतिरिति क्षीरोदमास्कन्दति । दुर्गाधीश इति स्फुट पुररिपु निर्दिष्टि भोगोत्कटश्रीरित्यर्हति वासुकि स्वयशसा दिल्लीन्द्रचूडामणि ॥ ३१ ॥

### मान

जयश्रिय कृपाणीय वेणी मानाख्यभूपते । अस्या कचग्रहीतायामभवन्मिसुखी तव ॥ ३२ ॥

### निजामशाहः

नृपतिनिजाम तवाद्भुतचरणार्पणपद्मपीडाभि । रचयति वहिरिव रसनामकरणध्वजकेतनादवनिः ॥ ३३ ॥ धरणिधर निजामशाह शुम्भत्करकरवालकरालकालसर्पैः । द्विपदसुपवन निपीय पीनो दिशि दिशि भुवति कञ्चुक यशस्ते ॥ ३४ ॥ चटत्कटरघोटकप्रकटचापटङ्कारघटचटदिति स्फुट स्फुटति मेदिनी खर्परम् । निजामधरणीपतौ चलति कौतुकाडम्बरा-दिव भुवनमण्डल दरदरीदरीदर्यहो ॥ ३५ ॥ क्षोणीनाथ निजामशाह भवतः प्रौढे प्रतापानलैर्वेगेन द्रवरूपतामुपगते धामीश्वराणा चये । अत्यद्भुतरथामधोरणि सुदुर्भञ्जद्भ्द्र-मामणि श्यामलामिनि निपतद्धनितले मेरो समुन्मीलति ॥ ३६ ॥ क्षोणीनाथ निजाम तावकभुज लब्ध्वा भुजगीश्वरं जानीम करवालकालभुजगी किं नाम गर्भिण्यभूत् । मत्तेभेन्द्र विभिन्नकुम्भनिदलमुक्ताफलापच्छलादच्छाभण्डपरम्परामधि-रणे सूते स्फुरन्ती मुहु ॥ ३७ ॥ वाहव्यूहखुरक्षता वसुमती रेणीकृत्य मूर्च्छावती भेरीझाङ्कृतिचञ्चलेन पयसा वारानिधि सिञ्चति । दिग्माला तनुते निजामनृपतेर्यात पताकापुरैर्धूली धोरणिरध्वनीसुतमिव प्रौढ़ दिव धावति ॥ ३८ ॥ निद्रालोष्ठी-गरिष्ठ प्रतिभटदमन श्रीनिजाम प्रतीम कृत्वा त्वत्कीर्तिगाथा वहति गणविधिं पद्मयोनि कठिन्या । पश्चाल्लेखा गुरूणाम-भवरग्रलग्नो वसुमतीमराला शुद्धा रेखा रघूना निजभुजग नभोनिम्नगादति दत्ता ॥ ३९ ॥ अहा सजातमद्भाधनर-नरपतिभावग्रहा कलिङ्गान्नैलङ्गा स्वर्गगङ्गाभिषवणमनय शौर्यदक्षाश्च वङ्गा । लाटा भिन्नटलाटा पन्नगमनदृढा-श्वासलोलाश्च चोला जायन्ते श्रीनिजाम पृथुरण भवत प्रौढनि स्वाननादात् ॥ ४० ॥

### नृसिंहः

आहवे जगदुद्दण्डगजमण्डलगाहने । श्रीनृसिंह महीपाल स्वस्त्यस्तु तव बाहवे ॥ ४१ ॥ त्वयि लोचनगोचर गते सफल जन्म नृसिंहभूपते । अजनिष्ट ममेति सादरं युधि विज्ञापयति द्विषा गण ॥ ४२ ॥ कौमुदीव तुहिनांशुमण्डल जाह्नवीव शशिखण्डमण्डनम् । यस्य कीर्तिरनुरूपमाश्रिता त्वां बिभाति नरसिंहभूपते ॥ ४३ ॥ गण्डाभोगे विहरति मदे चिन्द्रिते दिग्गजानां वैरिस्त्रीणा नयनकमलेष्वञ्जनानि प्रमार्ष्टि । यद्यप्येषा हिमकरकराद्वैतकौतस्मितेति ते कीर्तिर्दिक्षु स्फुरति तदपि श्रीनृसिंहक्षितीन्द्र ॥ ४४ ॥ विधात्र सम्पुकविता यानस्य तुरंगो वाञ्छाया पन्नगपदवी भोगस्य मृगाक्षी । श्रोतोस्य त्रिभुवनटिनी मासस्य वसन्तो भूषस्य कनकगिरी भूपस्य नृसिंह ॥ ४५ ॥ निशास्य चन्द्र शयन-तल्पस्य शशिमुखी सभास्य विद्वान् श्रवणपुटस्य हरिकथा । पन्नगस्य गान दिविगमनस्य निर्झरी महीस्य मन्ये सपदि नरसिंह क्षितिपति ॥ ४६ ॥ श्रीलक्ष्मीनरसिंहसान्द्रजलदे चञ्चत्करालीतडिद्भ्राजि च्छन्नरिपुप्रतापतपने कोपानलं वर्षति । पूर्णा शोणितवाहिनी सुरमन सतापत्रानल शान्तोऽभूद्विर-राम वैरिवनितालीमतमार्गोदय ॥ ४७ ॥ निर्यच्छोणित पूरताम्रवपुष सैरं रुदन्तो मुहुर्दन्तैर्श्रीनरसिंह ते रिपुजना दिग्गजसो निष्प्रभा । उच्छ्वलत्पात्रनाल्प्रहितास्ते नूल-मासन्पुनर्जन्मानो रणभूमिमातुरुदगत्तगर्भेन च्युता ॥४८॥ देव त्वत्तरुणप्रतापशिखिनो नि शेषमेधायते शत्रूणा कुल तदीयमयशो जानामि धूमायते । मार्तण्डानुकृतनगरनगाग्नी ज्वाला न कलापायते दृश्यमाना विकम्पता सुमनसां श्वद्ध पाततायते ॥ ४९ ॥ किं मध्याह्नदिवाकरोऽयमपर किं वाय मौर्वानल किं वाग्नी चपरान्य पशुपत किं मालनेत्रानल । किं वाऽस्थौ प्रलयानल किमथवा सर्वोऽपि मौमानल श्रीमन्नृसिंह मत्प्रतापमहिमा नोदेति केषा मति ॥ ५० ॥ काठिन्य कुचकुम्भयोर्नयनयोश्चाञ्चल्यमेतद्द्वय मो भवता कथ न पद्योरष्टाक्रमागादितम् । इत्थ श्रीनरसिंह ते त्रिभुवनाधीशस्य धाटीभिया कान्तारेषु मिथ पलायनपरा जल्पन्ति वैरिस्त्रिय ॥५१॥ एता सन्ति गर्भगौरवमवक्षेपोन्वरोधाहना कान्ता-रेषु पलायितु वत कथ पद्मा भवेयुः क्षमा । इत्थ चेतसि

१ दलपतिराय कविकुमारसङ्गसीसवोनाम् , २ इन्द्रस्य ३ श्रावणम्

१ चन्द्रकलाभूषणम् , हरमित्यर्थ २ गण्डस्थले ३ पठिते ४ प्रोञ्छति ५ हरवीथ्यादेरथें , मतिङ्गुमेभ्यो ६ इत्यनायते

सविभाव्य सद्य वैकुण्ठकण्ठीरव त्वद्यादावलिमि सखीभिरिव किं तद्भर्मपात कृत ॥ ५२ ॥ स्नातस्त्वद्रिपुरक्तपाथसि यशो धौताम्बर धारयँल्लक्ष्मीश त्वदरातिवक्त्रकमलैर्भूदेवता पूजयन्। जुह्वचैतदसृक्प्रकोपदहने युष्मत्प्रतापोदय शत्रुच्छन्नधरार्थ दर्पयशसा प्राणाहुतीराददे ॥ ५३ ॥ कीर्तिं श्रीनरसिंह ते त्रिपथगा तत्रोदित कैरव चान्द्र मण्डलमत्र नीलमिव यच्चञ्चद्भृङ्गवृन्द किमु। यद्वा त्वद्दलितारिवृन्दतरुणीचित्ते घनाभे स्थल चन्द्रस्तत्र विभाति नीलमिव यद्धूम स मन्यामहे ॥ ५४ ॥ अन्तर्विष्णोखिलोकी निवसति फणिनामीश्वरे सोऽपि शेते सिन्धो सोऽप्येकदेशे तमपि चुलुकयां कुम्भयो निश्चकार। धत्ते खद्योतलीलामयमपि नभसि श्रीनृसिंह क्षितीन्द्र त्वत्कीर्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीय विभाति ॥ ५५ ॥ नृत्यद्भर्गाट्टहासप्रचयसहचरैस्त्वत्कीर्त्यै शोभिर्धावल्य नीयमाने त्रिजगति परित श्रीनृसिंहक्षितीन्द्र। नेर्ष्यदेव नाभीकमलपरिमलप्रौढिमासादयिष्यद्देवाना नाम विष्यत्कथमपि कमलावामुकसारबोध ॥५६॥ श्रीमद्वैकुण्ठकण्ठीरव तव निनदाकर्णनत्रासधावच्छक्रेभोद्भिन्नगण्डस्थल विगलदतिस्वच्छमुक्तामणीनाम्। माला तारावलीय विलसति च पतद्दानधाय पयोधिनो चेत्कल्या नु तारावलिस्थ लवण सागरोऽसौ कुतस्त्य ॥ ५७ ॥ द्विर्भाव पुष्पकेतोर्विबुधविटपिना पौनरुक्त्य विकल्पश्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्ति। द्वैत देवस्य दैत्याधिपमथनकलाकेलिकारस्य दुर्नेत्रानन्द कोविदाना जगति विजयते श्रीनृसिंहक्षितीन्द्र ॥५८॥

### परशुराम

आदर्शाय शशाङ्कमण्डलमिद हर्म्याय हेमाचल दीपाय द्युमणिं महीमिव कथ नो भिक्षवे दत्तवान्। दित्सापल्लवित प्रमोदसलिलव्याकीर्णनेत्राम्बुजो जानीमो भृगुनन्दनस्तदखिल न प्रायशो दृष्टवान् ॥ ५९ ॥ गोनाचारविचारपारगतया वृद्धाभिरादिश्यया मात्रा वस्तुषु तेषु तेषु पुरत प्रस्तारितेषु क्रमात्। अन्नप्राशनवासरे सरभस वक्षोभरोत्सर्पिणा येनात्त धनुरीक्षिताश्च सपदि क्षत्रावतद्या दिश ॥६०॥ तन्वन्ती तिमिरद्युति कृतवती प्रत्यर्थिचक्रव्यथामेषा भार्गव तावकी विजयते निस्त्रिंशधारा निशा ॥ युद्धक्षुद्रविपक्षपक्षविदलत्कुम्भीन्द्रकुम्भस्थल प्रद्यन्मौक्तिककैतवेन परितस्तारावलीं वर्षति ॥ ६१ ॥

### पाण्ड्य

तवाङ्गणे सुन्दर वीर पाण्ड्य मतगजा शृङ्खलिनो विभान्ति। आवासदानादरिभूपनीनामाशान्तशैला इव सापराधा ॥ ६२ ॥ विन्ध्यादि करसाधनी निरुपमो रत्नाकर कोशभृत्सौगन्धी मलयाचल परिचरा सर्वेऽपि विधाधरा। विश्वाशापरिपूरण वितरण देशोऽप्यहो दक्षिण पाण्ड्याखण्डल वीर पाण्ड्य भवत किं किं न लोकोत्तरम् ॥ ६३ ॥ एतद्दन्तिबलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुव सङ्ग्रामाङ्गणसीम्नि जगमगिरिस्तोमभ्रमाधायिभि। पृथ्वीन्द्र पृथुरेतदुग्रसमरप्रेक्षोपनम्रामरश्रेणीमध्यचर पुर क्षितिधरक्षेपाय धत्ते धियम् ॥ ६४ ॥

### पारसीकक्षितीश

यदपि कटकयात्रारोधि पायोधिना ते दिशि दिशि मम पत्या पारसीकक्षितीश। तदपि कुरु सुधा नो जीवितान्त नितान्त कथयति बहुभार्ये नैकनारीवियोग ॥ ६५ ॥

### पृथ्वीराज

म दश्चन्द्रकिरीटपूजनरसे तृष्णा न कृष्णार्चने स्तम्भ शम्भुनितम्बिनीप्रणतिषु व्यमो न धातुर्गृहे। अस्माक परमर्दनोऽस्ति वदने न्यस्तेन सरक्षित पृथ्वीराजनरेश्वरादिति तृण तत्पत्तने पूज्यते ॥ ६६ ॥

### वल्लालिदास

वल्लालिदास भवत शुभनामवर्णा पञ्चेषुपञ्चविशिखन्ति नितम्बिनीषु। प्राणति बन्धुषु विरोधिषु पाण्डवन्ति देवद्रुमन्ति कविपण्डितमण्डलीषु ॥ ६७ ॥

### वल्लाल

वल्लाल क्षोणिपाल त्वदहितनगरे संचरन्ती किराती कीर्णान्यालोक्य रत्नान्युरुतरखदिराङ्गारशङ्काकुलाङ्गी। मुक्त्वा श्रीखण्डखण्ड तदुपरि मुकुलीभूतनेत्रा धमन्ती श्वासामोदानुयातैर्मधुकरनिकरैर्धूमशङ्का बिभर्ति ॥ ६८ ॥

### वाङ्गालक्षोणिपाल

आमेयास्त्रप्रवीणप्रबलमृगमटा शत्रुसक्षोभदक्षा यस्य प्रौढप्रतापानलबहलशिखास्ति घनत्व प्रयान्ति। सोऽयं प्राचीपयोधिप्रहितकरततीतूर्णसपूर्णकोषो वाङ्गालक्षोणिपालस्त्रिभुवनजनतागीतकीर्तिप्ररोह ॥ ६९ ॥

### वीसल

आ विन्ध्यादा हिमाद्रेर्विरचितविजयस्तीर्थयात्राप्रसङ्गादुद्ग्रीवेषु प्रहर्तृष्वपतिषु विनमत्कन्धरेषु प्रपन्न। आर्यावर्तं यथार्थं पुनरपि कृतवान्म्लेच्छविच्छेदनाभिर्देव शाकम्भरीन्द्रो जगति विजयते वीसल क्षोणिपाल ॥ ७० ॥

### भावसिंह

यस्यासि कोपपुञ्जे वसति खुरपुटे वाजिना गन्धवाहो लक्ष्मी सन्नेहदृष्टौ कमठकुलमणेर्वाचि वाचामधीशा। रौक्षे कौक्षेयकाग्रे क्षपितरिपुगणे कोपनोऽसौ कृतान्त वरत श्रीभावसिंह प्रबलमरभुजामाश्रय नाश्रयेत ॥ ७१ ॥

### भीम

रुधिरविसरप्रसाधितकरालकरवालरुचिरभुजपरिघ। झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभाति नृपभीम ॥ ७२ ॥

---

१ मिन्योदरे २ द्वेषे ३ ज्योतिरिङ्गण ४ विस्तारस्य ५ सदृशे ६ दीप्तिकम्बुक इत्यर्थ

१ वणवानाम् २ महती ३ सङ्ग्रामे

### भैरव

धनानि विद्वत्कविमण्डलीषु पक्ष्मेषुबाणानपि कामिनीषु । वर्षन्ति वज्राण्यरिधोरणीषु श्रीभैरवक्षोणिमणेः कटाक्षाः ॥ ७३ ॥

### भोज

त्वच्चित्ते भोज निर्व्याजं द्वयं तृणकणायते । क्रोधे विरोधिनां सैन्यं प्रसादे कनकोच्चयः ॥ ७४ ॥ भोज त्वद्दानपाथोधौ दरिद्रस्य निमज्जतः । न कोऽपि हि भुजालम्बं दत्ते मेऽभयदायकम् ॥ ७५ ॥ निजानपि गजान्भोजं ददानं प्रेक्ष्य पार्वती । गजेन्द्रवदनं पुत्रं रक्षत्यथ पुनः पुनः ॥ ७६ ॥ प्रतापभीत्या भोजस्य तपनो मित्रतामगात् । और्वो वाडवतां धत्ते तडित्क्षणिकतां श्रिता ॥७७॥ भोज त्वत्कीर्तिकान्तायाः नभोभालस्थितं महत् । कस्तूरीतिलकं राजन्गुणागारं विराजते ॥ ७८ ॥ अस्य श्रीभोजराजस्य द्वयमेव सुदुर्लभम् । शत्रूणां शृङ्खलैर्लोहं ताम्रं शासनपत्रकैः ॥ ७९ ॥ धारेश त्वत्प्रतापेन पराभूतस्त्विषांपतिः । सुवर्णपात्रव्याजेन देव त्वामेव सेवते ॥ ८० ॥ त्वद्यशोजलधौ भोज निमज्जनभयादिव । सूर्येन्दुबिम्बमिषतो धत्ते कुम्भद्वयं नभः ॥८१॥ शुक्तिद्वयपुटे भोज यशोब्धौ तव रोदसी । मन्ये तदुद्भवं मुक्ताफलं शीतांशुमण्डलम् ॥ ८२ ॥ अद्य धारा सदाधारा सदालम्बा सरस्वती । पण्डिता मण्डिताः सर्वे भोजराजे भुवं गते ॥ ८३ ॥ श्रीभोज साम्यं तव कल्पवृक्षः सदावदान्योऽपि कथं प्रयाति । यतो भवद्दानसुपुष्टविप्रद्रव्येन कुक्षिंभरिरस्य भर्ता ॥ ८४ ॥ भोजप्रतापं तु विधाय धात्रा शेषैर्निरस्तैः परमाणुभिः किम् । हरः करेऽभूत्पविरम्बरे च भानुः पयोधेरुदरे कृशानुः ॥ ८५ ॥ भोजप्रतापाग्निरपूर्व एष जागर्ति भूभृत्कटकस्थलीषु । यस्मिन्प्रविष्टे रिपुपार्थिवानां तृणानि रोहन्ति गृहाङ्गणेषु ॥ ८६ ॥ यथा यथा भोजयशो विवर्धते सितां त्रिलोकीमिव कर्तुमुद्यतम् । तथा तथा मे हृदयं विदूयते प्रियालकालीधवलत्वशङ्कया ॥ ८७ ॥ पन्थाः संहर दीर्घतां त्यज निजं तेजः कठोरं रवे श्रीमन्विन्ध्यगिरे प्रसीद सदयं सद्यः समीपे भव । इत्थं दूरपलायनश्रमवतीं दृष्ट्वा निजप्रेयसीं श्रीमद्भोज तव द्विषः प्रतिदिनं जल्पन्ति मूर्च्छन्ति च ॥ ८८ ॥ धाराधीश धरामहेन्द्रगणनाकौतूहली यामयं वेधास्त्वद्गणने चकार खटिकाखण्डेन रेखां दिवि । सैवेयं त्रिदशापगा समभवत्त्वत्तुल्यभूमीधराभावात्तु त्यजति स सोऽयमवनीपृष्ठे तुषाराचलः ॥ ८९ ॥ राजन्मुकुटप्रदीप सकलक्ष्मापालचूडामणे युक्तं सचरणं तवाद्भुतमणिच्छत्रेण रात्रावपि । मा भूत्त्वद्वदनावलोकनवशाद्व्रीडाभिनम्रः शशी मा भूच्चेयमरुन्धती भगवती दुःशीलताभाजनम् ॥ ९० ॥ छन्नं सैन्यरजोभरेण भवतः श्रीभोजदेव क्षमारक्षादक्षिण दक्षिणक्षितिपतिः प्रेक्ष्यान्तरिक्षं क्षणात् । निःशङ्को निरपत्रपो निरनुगो निर्बान्धवो निःसुहृन्निःस्त्रीको निरपत्यको निरनुजो निर्हाटको निर्गतः ॥ ९१ ॥ मुक्ताः [1]केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः [2]प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः । दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥ ९२ ॥ विद्वद्वृन्दगुणानुरूपविभवत्यागैककल्पद्रुमे स्वर्गं यामिनि भोजराजनृपतौ विद्यानवद्यात्मनि । दातारो भुवि नैव भूमिवलये मा सन्तु किं तावता ज्ञातारोऽपि न सन्ति हन्त नितरामेतावता दूयते ॥ ९३ ॥ स्पृष्टाकृष्टासिपिष्टोत्कटकरटिघटाकुम्भकूटावटान्तर्निष्ठ्यूतासृक्तटिन्यास्तटनिकटरटत्कोणपादाट्टहासः । भोजेन्द्र त्वद्रणक्ष्माक्षतभटविकटोरःस्थलत्रोटकुप्यद्गृध्रोघत्रोटिकोटिप्रकटचटचटाशब्दरौद्रोऽभवद्राक् ॥ ९४ ॥ भो भोः श्रीभोजदेव श्रयत विनयतः शत्रवः क्षत्रवर्गाः प्राणत्राणाय नौका न भवति भवतां क्वाप्यरण्यं शरण्यम् । मत्वा मातङ्गकुम्भद्वितयमिति पुरा क्रूरवृत्तिर्भिनत्ति क्रुद्धः शुद्धान्तकान्ताकुचकलशयुगं रहसा सिंहशावः ॥ ९५ ॥ नीरक्षीरे गृहीत्वा सकलखगपतीन् याति नैलैकजन्मा चक्रं धृत्वा कराब्जे सकलजलनिधींश्चक्रपाणिर्मुकुन्दः । सर्वानुद्धृत्य शैलान्दहति पशुपतिर्भालनेत्रेण पश्य व्याप्ता त्वत्कीर्तिकान्ता सकलवसुमती भोजराज क्षितीन्द्र ॥ ९६ ॥ स्वर्गाद्गोपाल कुत्र व्रजसि सुरमुने भूतले कामधेनोर्वत्सस्यानेतुकामस्तृणचयमधुना मुग्ध दुग्धं न तस्याः । श्रुत्वा श्रीभोजराजप्रचुरवितरणं व्रीडशुष्कस्तनी सा व्यर्थो हि [3]स्वात्मयासस्तदपि तदरिभिश्चर्वितं सर्वमुर्व्याम् ॥ ९७ ॥ कूर्म पातालगङ्गापयसि विहरतात्तत्तटीरूढमुस्तामादत्तामादिपोत्री शिथिलयतु फणामण्डलं कुण्डलीन्द्रः । दिङ्मातङ्गा मृणालीकवलनकलनां कुर्वतां पर्वतेन्द्राः सर्वे स्वैरं चरन्तु त्वयि वहति विभो भोज देवीं धरित्रीम् ॥ ९८ ॥

### मणिपाल

प्रामाण्यं परतो न शक्तिगणना सादृश्यलोपः सदा कार्ये चेश्वरकर्तृ नानुमितौ ज्ञानं विशिष्टात्मकम् । सर्वं न्यायनयानुसारि विबुधे चैतन्यनाशोपमाचक्षते चेन्मणिपाल भूप भवतो नैयायिकत्वं कुतः ॥ ९९ ॥

१ सूर्यः २ गण्डस्थलद्वितयम् ३ द्यावापृथिव्यौ ४ इन्द्र ५ सुवर्णगिरिः ६ 'खड्ग' इति प्रसिद्धेन कठिनीशकलेन

१ सुरतक्रीडायां विच्छिन्नमुक्ताहारादगलिताः २ अपसारिता ३ जैन ४ मद्य

### मल्लशाह

मृग प्रमीलल्लोचन पिक कृतोक्तिमोचन श्रितानति कृतातितिर्मरालिकास्खल्द्गति । निरीक्ष्यते लसन्मते सुमल्ल शाहभूपते तवारिकामिनी वृथाद्भुत हुताटवी यथा ॥ १०० ॥ पलायिता तवारिवामलोचना यदा यदा पुलिन्दनायकै सुलिप्तकाल्कूटसायकैः । विहाय नासिकासु मौक्तिकं स्रजं च मौक्तिकीं विलुण्ठिता पुमर्थपञ्चमेह मल्लभूपते ॥ १०१ ॥ आदायादाय मुक्तास्तदनु शिखिधियादाय माणिक्यवर्गं धूमभ्रान्तिं वहन्त्य स्वरदनकमला मोदलुब्धालिवृन्दे । पश्तु भिल्लव्य प्रवृत्ता सरभसमस कृचद्विषत्स्तनेषु ब्रूमः किं कीर्तिपूर धवलितभुवन मल्लशाहस्य तस्य ॥ १०२ ॥

### माणिक

यश शशाङ्काभ्युदये प्रवृद्धो द्विषद्वधूनेत्रजलाम्बुराशि । नष्ट हि दारिद्र्यतमो बुधाना तव क्षितौ माणिक भूमिपाल ॥ १०३ ॥ सदर्महारैर्भवता प्रदत्तैर्मदङ्गना कण्ठतटामहारै । श्रीमाणिकक्षोणिपते प्रतुष्ट यथा यशो गायति तद्विधेहि ॥ १०४ ॥ सजाते द्रवरूपता हि रजताद्रौ स्वर्णशैले द्रुत भूमीपालललाम माणिकविभो प्रौढे प्रतापानलै । योगेऽभूदनयो सुपाण्डुररुचि सातेऽरिका ताजनैर्नीता स्वीयकपोलयोश्च निरहव्याजेन गोपायते ॥ १०५ ॥ भोगासक्तैक्चेता भयभरासुखक्लृप्तीतिह्या खाश्रिताना भोगा भव्याय यच्छञ्जगति भवत साधु भण्डारतिश्च । भूपाना ग्लानिकर्ता मदनगजभयध्वसदेहो हि भल्लाकीर्ण श्रीमाणिनेन्द्रस्त्वमिव तव रिपुस्तव दम्भ प्रतीम ॥ १०६ ॥ सङ्ग्रामक्षोणिदृप्य च्चपलरिपुचमूसिन्धुकीलालमाला पीत्वा काल कृपाणोऽम्बुद उपसमर गर्जते वीरघोषै । वर्षत्युद्दामगौर दिशि दिशि तव भो कीर्तिनारीभकुम्भप्रोद्य मुक्ताहिमाद्रमच्छुरित मरितत्रैर्माणिक्क्षोणिपाल ॥ १०७ ॥

### माधव

सत्यासक्तमना गुणाकरलताकीर्णो न दीनाश्रयोऽरिष्टध्वसपराजयश्च सुमनोवृन्दैरल वन्दित । नानास्थानकलाप्रधानमहिमा नित्य सदानन्दक श्रीमान्माधव एव माधव सम क्षोणीतले राजते ॥ १०८ ॥

### मानसिंह

काश्मी काश्मी न धत्ते कलयति न दृशा केलितल्प कलिङ्गी सिन्दूरं दूर एव क्षिपति करतलन्यस्तमा भी पुरंध्री। सौराष्ट्री मार्ष्टि भूप सपदि नयनयो रक्तता रक्तिमान कार्णाटी कर्णिकाया मन्नियति मनो मानसिंहप्रयाणे ॥ १०९ ॥

### माल्वाखण्डल

पर्यङ्को राजलक्ष्म्या हरितमणिमय पौरुपाब्धेस्तरङ्ग सङ्ग्रामत्रासताम्यन्नुरव्यानियगोहृसनीलाम्बुवाह । ममप्रत्यर्थिवशोल्वणविजयकरिस्नानदानाम्बुपट्ट खङ्ग क्ष्मासौविदल्ल समिति विजयते मालवाखण्डलस्य ॥ ११० ॥

### मुकुन्ददेव

करवारिरुहेण सधुनाने तरवारिं नृपतौ मुकुन्ददेवे । वरयन्त्यमरावतीतरुण्य प्रथम काञ्चनपारिजातमाला ॥ १११ ॥

### मुञ्ज

लक्ष्मीर्यास्यति गोविन्दे वीरश्रीर्वीरमेष्यति । गते मुञ्जे यश पुञ्जे निरालम्बा सरस्वती ॥ ११२ ॥

### मुद्दाफरशाह

आकाश प्रसर प्रसर्पत दिशस्त्व पृथ्वि पृथ्वी भव प्रत्यक्षीकृतमादिराजयशसा युष्माभिरुज्जृम्भितम् । श्रीमुद्दाफरशाहपार्थिवयशोराशे समुज्जृम्भणाद्ब्रीजोच्छ्वासविदीर्णदाडिम दशा ब्रह्माण्डमारोक्ष्यति ॥ ११३ ॥

### राजबहादुर

नित्यं वृद्धिमुपैषि सकल्यसे सर्वा कला सर्वदा सानन्द कुमुदाकर वितनुषे नास्ते कलङ्कस्तव । सर्वाशा परिपूरयन्समुदयं धत्सेऽनिश सर्वतो न श्रीराजबहादुरेन्द्र नृपते चन्द्राधिकस्त्व कथम् ॥ ११४ ॥

### राजेन्द्रसिंह

मूर्धा कल्याणवाही करजितसुध सवदा पूर्णकामो विख्यात कर्णवृत्त्या वचसि न च पटुश्चिधपाकानुभावी । कोपापेक्षी परस्मादुचितबहुकथ सवदा पूर्णलोक इत्थं राजेन्द्रसिंह त्वमिव तव रिपुस्तत्र कर्म्म प्रतीम ॥ ११५ ॥

### रामचन्द्र

एकादशरुद्राणामेका गौरीत्यनौचितीं मत्वा । राघव नृप तव यशसा दशापि गौरीकृता हरित ॥ ११६ ॥ रत्नैरिभवनलिखिता सीतामाहर्तुमुद्यत्य । कपिकौणपमण्डल्यो शिर शिव भूयो भवति सरम्भा ॥ ११७ ॥ शरासने सायकमादधाने श्रीराममद्रक्षितिपालमौलौ । सुराङ्गनानां वलाल्साना वामानि नेत्राणि परिस्फुरन्ति ॥ ११८ ॥ गायन्तु किंनरगणा सह किंनरीभि श्रीरामचन्द्र शिखरेषु हिमाचलस्य । शेषे दुकुददलबालमृणालनालनीहारहारहरहासमितं यशस्ते ॥ ११९ ॥ नालीकभङ्गकृदतीव नैरीनयनधुर्नर्क्षेशो नवसुधाविभावहेतु । राजा किमिन्दुरपि नार्यभिमानहारी राजा पर जयति राघवसार्वभौम ॥ १२० ॥ नृपतिमुकुटरत्न त्वत्प्रयाणप्रशस्तिं प्लवगपदनमद्यनिर्भराक्रान्तमोर्ग । लिखति दशनटङ्कैरुन्नमद्भिर्नमद्भिर्जरठकमठभर्तुर्खर्परे सर्पराज ॥ १२१ ॥ रघुतिलक नृपाल त्वद्विपक्षोणि

१ वत्तरशत्वा वसुवतीवदने

१ दिश २ अलीकमङ्गकृद्, पक्षे,-कमलविकासकृत् ३ अनाथबन्धु, पक्षे,-नदीन समुद्रस्तद्वन्धु ४ क्षत्रियश्रेष्ठ, पक्षे,-नक्षत्रनायक ५ वसुधैश्वर्यस्य कारणम् पक्षे,-नवीनाया सुधाया यो विभवस्तस्य मुख्यकारणम् ६ शत्रुमानहारी, पक्षे,-नारीणां मानहारक ७ शरीरम् ८ कपाले ९ शेषराज

पाल्यप्रतिलसदपकीर्तिश्यामले विश्वजाले । भगवति भज माने कृष्णतां शूलपाणौ त्रिपुदधिगिरिपुत्र्यौ चक्रतुलक्ष विष्णु ॥ १२२ ॥ अधाक्षीनो लङ्कामयमयमुदन्व तमतर- द्विशल्य सौमित्रेरयमुपनिनायौपधिवनम् । इति स्मार स्मार त्वदरिनगरीभित्तिलिखित हनूमन्त दन्तैर्दशति कुपितो राक्षसगण ॥ १२३ ॥ यदि क्षुण्ण पूर्वैरिति जहति रामस्य चरित गुणैरेतावद्भिर्जगति पुनरन्यो जयति क । स्वमा- त्मान तत्सद्गुणगरिमगम्भीरमधुरस्फुरद्वाग्ब्रह्माण कथमुप- करिष्यन्ति कवय ॥ १२४ ॥ झगिति जगतीमाग- च्छन्त्याः पितामहविष्टपान्महति पथि यो देव्या वाच श्रम समजायत । अथ कथमसौ मुखेदेन न चेदवगाहते रघु- पतिगुणग्रामश्लाघासुधामयदीर्घिकाम् ॥ १२५ ॥ लज्जा कीर्तिर्जनकतनया शैवकोदण्डभङ्गे तिस्र कन्या निरुपमतया भेजिरे रामचन्द्रम् । आत्या पाणिग्रहणसमये ज्यायसी जातकोषा भूर्भे सार्धं खलु गतवती मध्यमाऽथो दिग- न्तान् ॥ १२६ ॥ गेहे गेहे सुभग भवतो रामभद्र क्षितीश श्यामालिरिय स्वमपि सविधे सस्पृह भावयन्त्यः । तस्मिन्नाकस्मिकमुपगते वल्लभे भीतिभाज पौष्प चाप तव करतले वेपमाना लिखन्ति ॥ १२७ ॥ अहो रघुशिरोमणे- रभिनवप्रतापावलिप्रचण्डकिरणप्रथाप्रसरसाध्वसादाश्चयम् । सुराधिपतिरम्बुदान्कमलमिन्दिरा सेवते हिमांशुरपि चन्द्रमा सततमम्बुधौ मज्जति ॥ १२८ ॥ कीर्ति श्रीरघुवशरत्न भवत सर्वाह्निनीगाहिनी दिक्पालानखिलान्परीत्य दधती पाण्यो प्रतापानलम् । सप्ताम्भोनिधिमण्डलान्यधिगता त्वय्येकपत्नी- व्रतस्यात्यै विष्णुपद स्पृशत्यनुदिन शेषस्य शीर्षा- ण्यपि ॥ १२९ ॥ कीर्तौ व्याप्तिमवेत्य वैरिवनिताबाष्पो- दधे साधनादुत्तुङ्गे पृथिवीभुजा परिवृढे शश्वद्वि- पक्षे स्थितम् । सर्वक्ष्मापतिमौलिमण्डनमणे श्रीरामचन्द्र प्रभो चित्र पश्य तव प्रतापदहन जानन्ति सत्ता- र्किका ॥ १३० ॥ श्रीराम त्वदनेकचित्रचरितप्रोद्दामकी र्तिश्रुतिप्रागल्भ्यादैयधूतमूर्ध्नि सकलत्रैलोक्यलोकेऽपि यत् । अश्रोता फणिनस्तदेतदुचित नो चेदहिस्वामिना व्याधूते शिरसि क भू क गिरय कामी दिशामीश्वरा ॥ १३१ ॥ आत्या भूवलय दशास्यदमन त्वत्कीर्तिहसी दिव याता ब्रह्ममरालसगमवशात्सा तत्र गर्भिण्यभूत् । पश्य स्वर्ग- तरङ्गिणीपरिसरे कुन्दावदात तया मुक्त भाति विशाल- मण्डकमिद शीतद्युतेर्मण्डलम् ॥ १३२ ॥ ये मज्जन्ति निमज्जयन्ति च परांस्ते प्रस्तरा दुस्तरे वार्धौ वीर तरन्ति वानरभटान्संतारयन्तेऽपि च । नैते ग्रावगुणा न वारिधि- गुणा नो वानराणा गुणा श्रीमद्दाशरथे प्रतापमहिमा सोऽय समुज्जृम्भते ॥ १३३ ॥ कीर्ति श्रीरघुवशदीप भवतो दूती मुरारे प्रियाँ यत्नाच्चुम्ब्यमदात्तदादि गिरिशो- ऽभूदर्धनारीश्वर । ब्रह्माभूच्चतुराननं सुरपतिश्चक्षु सहस्रं दधौ स्कन्दो मन्दमतिश्चकार न करस्पर्श स्त्रिया शङ्कित ॥ १३४ ॥ एक काञ्चनभूधर सुरालय वास सुधानारिधि तीर तैरकराजमण्डलमिद सप्राप्य सत्कुण्डलम् । दूरे- स्थापि च तेन तेन सदृश स्वां भूषण चापरं स्त्री मान- ग्रहिलेव याचतितरां श्रीराम कीर्तिस्तव ॥ १३५ ॥ सग्रामो दिवसायते तव भुजः पूर्वाचलेन्द्रायते त्वत्कोधोऽप्यरुणा- यते तव लसच्छौर्यं प्रकाशायते । त्वद्वैरी तिमिरायते तद-

---

१ सप्तर्दीस्त्रमनस्त्रापनाय दिव्यकरण शुक्रमेव अत्राय भाव —या हि स्त्री दिव्य कर्तुमिच्छति सा पूर्व गङ्गा गाहते, अपर देवता भद्र शिनीकृत्य पाण्योरनल दधती सप्तमण्डलान्यतिक्रामति, ततो विष्णुपद स्पृशति, तथा सर्प कर्षति, तद्वदिय त्वत्कीर्तिरपि जलाधिराजपदविष्णु पदसर्पस्पर्शनाख्यानि पञ्च दिव्यानि सप्तर्दीस्त्रनिर्वाहाय विधत्त इति २ उत्सङ्ग ३ कम्पित ४ शेषशिरोधूनने भूमे पात एव स्यात्तत स्तेषां गिर्यादिवस्तूनां क्वाप स्थान भवेद्यतस्तेषां भूम्याश्रितत्वात्तस्याश्च शेषाश्रितत्वादित्यर्थ

१ हस २ तीरे ३ कुन्दवदुज्ज्वलम् ४ लक्ष्मीम् ५ तदारभ्य ६ महेश्वरेणेत्थ तर्कितम्—यद्यहममुना स्वपार्श्वे न स्थापयिष्यामि तदेव कीर्तिदूती लक्ष्मीमिवापहृत्य मम कामिनी गौरीमपि रामाय प्रदास्यतीति भिया स्वाङ्ग एव गौरी स्थापिता तत्प्रभृत्यर्धनारीश्वरो हर इति ख्याति ७ ब्रह्मणा स्वपत्नीरक्षणार्थं चतसृष्वपि दिक्षु मुखानि निर्मितानीति भाव ८ यतो बहूनि चक्षूंषि मम चेद्भविष्यन्ति तदा स्वाप्सरस प्रलोभ्यापहर्तुमागच्छन्तीं कीर्तिदूतीमवलोकयिष्यामीति भाव ९ मन्दा विवाहेऽलसा मतिर्यस्य स १० यतश्चेदह कृच्छ्रेण प्राक्स्त्रिय परिणेष्यामि तथापि तदपहरणे मम तस्या वियोग एव भावी, तत किमनेन परिणयनारम्भेणेति विचारादिति भाव ११ ममैक काञ्चनगिरिर्दक्षिणे करे कटकोऽस्ति, वामे तु न किमपीत्येकनैवाभरणेन शोभेते पाणी, अतोऽपरं तादृश वलयाख्य भूषण मह्य देहीति प्रार्थयते १२ यतो मह्यमेक वास उपर्यधश्चाङ्गे परिधातु शक्यते १३ उष्णकरम् १४ इदमेक तारकाणां राजा चन्द्रस्तस्य मण्डल सत्कुण्डलमेक स्मिन्कर्णे संप्राप्य तत्सममपरकुण्डल द्वितीयकर्णार्थं याचति १५ दि कृपर्यन्त प्राप्तापि १६ स्त्रिया यो मान स्वपतिसौभाग्यस्वरूपस्तद्वा द्विगर्वस्तेन ग्रहिला ग्रहगृहीता १७ अन्यापि या मानिनी मानग्रह गृहीता भवेत्सा निदेशस्थापि पति प्रभविष्णु तत्सदृश याचते यद्भूमण्डलेऽपि नाप्यते तथैव कीर्तिरप्यपरं भूषण याचत इत्यर्थ १८ यथा दिवसे सूर्य प्रभाप्रगल्भमनागुरेति तथा त्वद्बाहुरपि संग्रामे स्वस्पष्टतां प्रकटयतीत्यर्थ १९ यथा भानुरस्ताचले भासते तथा चासौ त्वदङ्गे भासत इत्यर्थ २० यथारुणो रक्तवर्णोऽग्रे प्रादु र्भवति तथा क्रोधोऽपि रक्तमुखनेत्रादिना प्रादुर्भवतीत्यर्थ २१ यथा सूर्यस्योदये सर्वत्र प्रकाश प्रसरति तथा त्वत्प्रतापभानोरुदये तव शौर्यं स्पष्टमुदेतीत्यर्थ २२ यथा सूर्योदये तमांसि नाशमायान्ति तथा त्वत्प्रतापभानूदये तव वैरिणो दिगन्तगामिनो भवन्तीत्यर्थ

बलाहकसूर्यकान्तायते त्वत्कीर्ति कमलायते रघुपते त्वत्खड्गचण्डद्युते ॥ १३६ ॥ अस्माकं परमन्दिरस्य चरितं यद्यप्यवाच्यं भवेत्स्वामी त्वं कथयामि तेन भवतः किंचित्प्रियादूषणम्। श्रीमद्राम नृप त्वया रणमुखे पाणिग्रहं सादरं यस्याः सासिलता परस्य हृदये दृष्टा लुठन्ती मया ॥ १३७ ॥ सत्यं सा बहुरूपिणी समभवत्सिद्धिस्वरूपा भवत्कीर्तिः श्रीरघुवंशरत्न विमला जागर्ति विश्वोदरे। क्ष्मापारे रिपुमन्दिरे नृपपुरे रत्नाकरे निर्झरे कान्तारे गिरिशेखरे विषधरागारे तथैवाम्बरे ॥ १३८ ॥ गर्वविशेषविशालरावणभुजप्रोद्धर्षप्रतापानलज्वालाजालनवाम्बुदः कथमसौ सीतापतिर्वर्ण्यते। यस्यारातिनृपाः कृपाणजलधौ मग्नाः पुरो गौरवादत्युच्चैर्गतयो भवन्ति च पुनर्भित्त्वा रवेर्मण्डलम् ॥ १३९ ॥ भीमं यज्जलधिं जवेन हनुमानुल्लङ्घ्य लङ्कां गतो यच्चाशोकमहावनं दलितवानक्षं च यत्क्षुण्णवान्। सीतोपायनमौलिरत्नसहितं प्राप्तश्च यत्स्वामसौ तत्राप्येष भवत्प्रतापमहिमा नियन्त्रेण कारणम् ॥ १४० ॥ धत्ते नायक राम तावकयशो रामे शशाङ्के भरुद्वाहे स्वर्गगजे हरे फणिपतौ वाण्यां वृषे मे रुचिम्। अन्येषां तु तदम्बरे तदहिते तद्यज्ञने तन्मदे तत्कण्ठे च तदीक्षणे तदलके तत्प्रोथके तत्पये ॥ १४१ ॥ श्रीमन्नायक रामभद्र भवतः पाणौ कृपाणं रणे दृष्ट्वा यदभूदरिक्षितिभुजां तत्तत्समाकर्णय। अङ्गे वेपथुरन्धता नयनयोर्वक्त्रे तृणं भूयसी भीतिश्चेतसि वाचि सस्तुतिकथा हस्तद्वयं मस्तके ॥ १४२ ॥ आकृष्टे कवचादहीन्द्ररसनाकल्पे कृपाणे त्वया श्रीमन्नायक रामचन्द्र भवतः प्रत्यर्थिना वेश्मसु। गाहन्ते सहसा लुलायचमरीशार्दूलशाखाचरीयक्षोरक्षशृगालकोलशैलभृद्भल्लूकभिल्लादयः ॥ १४३ ॥ रेफं व्यञ्जनराजतां तव तनाकारप्रकर्षं स्वरेष्वन्त्यस्यापि मकारं विस्फुरन्ति ते वर्गाक्षरेष्वादिता। ये समूय निगद्यते रघुकुलालंकारहीराङ्कुरो देव क्षोणिसुतापयोधरतटीशृङ्गारहारो हरिः ॥ १४४ ॥ स्वेदाम्भःकणमण्डलानि सुरतलीखेलोद्भवान्यन्वहं तद्वाह्वो रसैर्यन्महाबलः इति ख्यातिं गतो मारुतः। तं चास्वाद्य मुहुः सहस्रफणिताशाली बलीयानहिर्धत्ते कोमलकोमलैरपि फणैः श्रीरामचन्द्र स्थिराम् ॥ १४५ ॥ श्रीरामे मृगयां गतेऽपि धनुषा बाणे समारोपितेऽप्याकर्णान्तगतेऽथ मुष्टिगलितेऽप्येणाङ्किलिप्तेऽपि च। न त्रस्तं न पलायितं न चकितं नोत्कम्पितं न द्रुतं मृग्या मद्वशगं करोति दयितं कामोऽयमित्याशया ॥ १४६ ॥ गाम्भीर्येण महोदयेन शरणत्राणेन मर्यादया सर्वाशापरिपूरणेन महता स्थैर्येण धैर्येण च। राम त्वामनुकर्तुमिच्छतितरां वारानिधिः किं त्वसौ पीतो वानरलङ्घितः प्रमथितो बद्धः श्रिया त्याजितः ॥ १४७ ॥ देव श्रीनृप रामचन्द्र भवतो दिग्जैत्रयानोत्सवे धावद्वीरतुरगचञ्चलखुरक्षुण्णक्ष्मामण्डलात्। वातोद्धूतरजोमिलत्सुरनदीसंजातपङ्कस्थलीदूर्वाचुम्बनचञ्चवो हरिहयास्तेनैव वृद्धं दिने ॥ १४८ ॥ साधर्म्येण कथं गृणन्तु यमुनावेणीं कृपाणीं च ते श्रीमद्राम चमूवरेण्य भवतो वाग्नाक्षसिद्धान्तिनः। नाकृष्टा हलिना न कालियशतात्क्रूरा न धाराजडा न च्छायाजनिता न वक्रबहुला न प्रांसभङ्गा क्वचित् ॥ १४९ ॥ आबाल्यं पतिरेष मे जगदिदं जानाति तत्र पुनर्भूमध्ये समुपागता तदपि ते विस्मायते यः पतिः। वृद्धा नास्मि गृहे वसामि सुचिरं तिष्ठन्स्थिरात्रेति तन्मास्वर्यादिव राम भूप भवतः कीर्तिर्दिगन्तं गता ॥ १५० ॥ का शृङ्गारकथा कुतूहलकथा गीतादिकानां कथा माद्यद्-

१ यथा भानोरुदये सूर्यकान्तमणिषु महास्तापः संजायते तथा भवदुदये सति वैरिस्त्रीहृदयेषु महापश्चात्तापो भवतीत्यर्थः २ यथा भानोरुदये कमलानि विकस्वराणि भवन्ति तथा त्वत्खड्गभानोरुदये त्वत्कीर्तिर्विकासमुपैतीत्यर्थः ३ तिग्मांशुस्त्वत्खड्गस्य सर्वथा सर्वोपमत्वमस्तीति शेषः ४ परस्त्रिया: ५ यतो भक्ताः स्वस्वामिनः कथमपि हानिं सोढुमक्षमाः स्त्रीदुर्लक्षणं तु परमपमानकारणमतो भवतीत्यर्थः ६ यथा काचित्पाणिगृहीती परपुरुषस्य हृदये विलासं कुर्याद्यदा तस्या असतीत्वलक्षणेन पुरुषस्य महद्दूषणं लग्नं भवेत् ७ नानारूपत्वेन विश्वव्यापित्वमभूदिति भावः ८ अणिमाद्यष्टसिद्धिमती ९ यथा योगिनी सिद्धा गिरिदर्यादिषु स्वकामचारिणी भवेत्तथा त्वत्कीर्तिरपीति भावः १० देदीप्यमाना ११ समूहः १२ अम्भोऽप्यनलोऽम्बुदेन शाम्यति यथा तथा तत्प्रतापाग्निरपि रामेण शामित इति भावः १३ स्वर्गयायिनो भवन्ति अन्यो हि यो जलधौ निमग्नो भवति स च नीचैर्गतिरेव भवतीति प्रसिद्धम् १४ मारितवान् १५ अरत्नित १६ बलभद्रे १७ उच्चैःश्रवसि १८ ऐरावते १९ नभस्य २० रामवक्षे तद्वस्त्रस्य नीलत्वादिति भावः २१ चन्द्रशत्रौ राहावित्यर्थः २२ कृष्णानामिव शैत्याम् २३ नक्षत्रपथे आकाश इत्यर्थः २४ कपि २५ येषां मुखे तृणं दृश्यते ते शत्रवा अपि गोवदवध्या इति भावः, २६ शिरसि करद्वयं स्वप्रणामार्थं कृतवन्त इत्यर्थः

१ सहस्रे २ तन्मन्दिराणां शून्यत्वेन वनचरतिरश्चां तत्र प्रवेशस्थानादिकार्यत्वादिति भावः ३ वनगाव ४ व्याघ्रा ५ वानराः ६ वराहाः ७ शल्यकाः ८ ऋक्षाः ९ व्यञ्जनेषु श्रेष्ठत्वम् १० करादिषु ११ शस्त्राभ्यासः १२ आस्वादयन् १३ यदा त्वया वैरिणो हतास्तदा त्वद्भुजयोः परिश्रमं खेदः उत्पन्नस्तच्छोषणादायुर्महाबलोऽभूदिति भावः १४ शेषः १५ पृथ्वीम् १६ दूर्वाङ्कुरभक्षणे रता अरुणेन प्रेरिता अपि न तूर्णं प्रयान्ति किंतु शनैरेव अत एव ग्रीष्मर्तौ महान्तो दिवसा जायन्त इति भावः १७ कथयन्तु १८ छाया सूर्यभार्या १९ पानीयपाता २० वानरकाम्

भूपालमालेरुद्वेल्लद्दुग्धवीचीवहल्धरिमाबद्धकक्षा कटाक्षा ॥ १६६ ॥ वीर चिन्तामणिश्चेत्कनकगिरितटीजन्मभूमिर्मवश्चेत्सेवकनी चेत्कामधेनुर्निधिकुलमखिल मूल्सस्कारभृच्चेत् । वित्तेशो रक्षिता चेत्सरसिजनिलया मञ्जरी चेत्तदा सादाम क्ष्मापाल्मौले तव भुजलतया कल्पवृक्ष सदृक्ष ॥ १६७ ॥ मन्ये मृत्यो सपत्नी जगति सुविदिता कालकूटस्य कन्या धात्री कर्कोटकस्य स्मरणभयकरी किं च वज्रस्य माता । कल्पान्ताग्ने पुरश्री पभवति भगिनी भीषणा कान्तारनेन्द्रतीथ ते कृपाणी सुरसुरसुदृशा रामचन्द्रक्षितीश ॥ १६८ ॥

### रामजाम

क्षुभ्यत्प्रत्यर्थिपृथ्वीपतिहृदयसरस्तोपशोष दधाने त्वद्दोष्णा सुप्रतापे तपति बहुगुणे रामजाम क्षितीन्द्र । सूर्या मित्र त्वमायात्ममजनि दहन कृष्णवर्मा निमज्जन्पारावाराम्बुपूरे निवसति वडवावह्निरन्यत्किमु धाम् ॥ १६९ ॥

### रामनाथ

करकम्पितखड्गयष्टिभीमे रणसनाहितरामनाथवीर । अरिभूभृदमर्त्यसुन्दरीणामचरन्दक्षिणवामलोचनानि ॥ १७० ॥

### रुद्र

कतिपयदिनस क्षय प्रयायात्कनकगिरि कृतवासरावसान । इति मुदमुपयाति चक्रवाकी वितरणशालिनि वीररुद्रदेवे ॥ १७१ ॥ कवीन्द्राणामाम प्रथमतरमेवाङ्गण भुवश्चलद्भृङ्गासङ्गाकुलकरिमदामोदमधुरा । अमी पश्चात्तेषामुपरि पतिता रुद्रनृपते कटाक्षा क्षीरोदप्रसरदुरुवीचीसहचरा ॥ १७२ ॥ भूयोभूयस्त्वदरिदलनाद्वासनाशासकाशायातैर्गतैरहह तरणेरुल्बणेषु व्रणेषु । साय साय लवणसलिलस्पर्शबाधासमाधावस्थाल्साकलितवपुषो रुद्र क स्यादुपाय ॥ १७३ ॥ चन्द्रोऽनेन कलङ्कितो वत वने रामोऽमुना वञ्चित किं चानेन कुलाङ्गनानयनयोर्लावण्यलक्ष्मीर्हृता । सम्यानामभिलापकस्य भवत श्रीरुद्रचन्द्र प्रभो तन्मन्ये हरिणस्य हन्त हननायाखेटकोपक्रम ॥ १७४ ॥ रुद्रस्यापि दिगम्बरस्य कृपया स्वर्गेऽमरा कोटिशो याचन्ते न कदापि काञ्चनमहो शश्वसदा भुञ्जते । एकोऽहं वसुधातले न च पुनस्तेहस पात्र सदा याचिष्ये कथमन्यभूपतिमित श्रीरुद्रभूमीपते ॥ १७५ ॥

### रूपनारायण

अये यदि समीहसे परपुरावरोध सदा समाकलय मद्वच किमपि रूपनारायण । प्रतीपनृपनागरीनयननीरकल्लोलिनी समुत्तरणचातुरी तुरगराजमध्यापय ॥ १७६ ॥

### रूपमणि

श्रीमद्रूपमणे गुणेन यदय हीनोऽपि नीतो गुरुर्गाढ गौरवमादरेण भवता तेनास्ति शम्भुर्भवान् । यत्तेनाप्यनृजु कलङ्कविकलो दोषाकरोऽपि स्फुट द्विजाधीशपदे विधाय विधृतश्चन्द्रोऽनिश मस्तके ॥ १७७ ॥

### विक्रमार्क

तत्कृत यन्न केनापि तद्दत्त यन्न केनचित् । तत्साधितमसाध्य यद्विक्रमार्केण भूभुजा ॥ १७८ ॥ सारसवत्ता विहता नवका विलसति चरति नो कङ्क । सरसीव कीर्तिशेष गतवति भुवि विक्रमादित्ये ॥ १७९ ॥ हस्ती वन्य स्फटिकघटिते भित्तिभागे स्वबिम्ब दृष्ट्वा दृष्ट्वा प्रतिगज इति त्वद्द्विषा मन्दिरेषु । दन्ताघाताद्दलितदशनस्त पुनर्वीक्ष्य सद्यो मन्द मन्द स्पृशति करिणीशङ्कया विक्रमार्क ॥ १८० ॥ कीर्तिस्ते दयिता तदीयजठरे लोकत्रय वर्तते तस्मात्त्व जगत पिता पितृधन येनाथिना त्वद्धनम् । वीर श्रीजर विक्रमार्क भवतस्त्याग न मन्यामहे कस्त्याग स्वकुटुम्बपोषणविधावर्थव्यय कुर्वत ॥ १८१ ॥

### विग्रहराज

ब्रूते सम्प्रति चाहुवाणतिलक शाकम्भरीभूपति श्रीमान्विग्रहराज एष विजयी सतानजानात्मन । अस्माभि करद व्यधायि हिमवद्विन्ध्यान्तराल भुव शेषस्वीकरणाय मास्तु भवतामुद्योगशून्य मन ॥ १८२ ॥

### वीरभान

लङ्काधामनि वीरभाननृपते प्रेक्ष्य प्रतापोदय प्रत्यागारमधीरनीरजदृशो भूयो हुताशभ्रमात् । क्षुभ्यद्वाणि विधूतपाणि विगलन्मुक्तामणि प्रस्खलद्वाणश्रेणि विलोलवेणि दयित कण्ठस्थले बिभ्रति ॥ १८३ ॥ भेरीझाङ्कृतिभिस्तुरगनिनदे कुम्भीन्द्रकोलाहले प्रस्थाने तव वीरभान दलित ब्रह्माण्डभाण्डोदरम् । आघाय ज्वलति प्रतापदहने रङ्कै पुनर्वेधसा तारानायकतारकासुरसरिद्व्याजादिवायोजितम् ॥ १८४ ॥

### वीरवर

कामो वामदृशा निधिर्नयजुषा कालानलो विद्विषा स्व शाखी विदुषा गुरुर्गुणवता पाथो धनुर्धारिणाम् । लीलावासगृह कलाकुलजुषा कर्ण सुवर्णार्थिना श्रीमान्वीरवरक्षितीश्वरवरो वर्तति सर्वोपरि ॥ १८५ ॥ जम्बुद्वीपगृहप्रकाशनकरी स्नेहक्षमाधायिनी नीत्योद्गीर्णमषीतति खलजनश्रेणीपतङ्गान्तकृत् । गाजीन्द्राकबरक्षितीश्वरमनश्चिन्तान्धकारापहा यस्य क्षोणिपतेरराजदखिल दीपोपमा लेखनी ॥ १८६ ॥

### वीरसिंह

वीरसिंहारिनारीणामञ्जनाक्ताश्रुबिन्दव । उरोजे पतिता रेजु सरोजे मधुपा इव ॥ १८७ ॥ यस्योच्छिन्ना न वेदा मनसि मदयता दूषणानामभावो दक्षो दूरेऽणुदृष्टेश्च जहति कठिनता दानशक्तिर्गरिष्ठा । आधत्ते यस्य कुन्द शिरसि

१ क्वचित् २ भवे ३ मद ४ नाद ५ दानम् ६ स्थाप-

दरनता यश्च दूरीकृताति स श्रीमान्वीरसिंह त्वमिव तत्र रिपुस्तत्र दैन्भ अतीम ॥ १८८ ॥ वैकुण्ठाभप्रकाम कमलयुतशिरा कुञ्जराकृष्टदृष्टि कोदण्डोदारनामाप्यमित-परिजनो विश्वविख्यातकीर्ति । सुन्दर्यासक्तचित्त समरण-विजयी कङ्कणाहारयुक्तो वीर श्रीवीरसिंह त्वमिव तव रिपु किंतु मुक्तादिवण ॥ १८९ ॥

## वेङ्कटपति

अत्र मन्मथमिवातिसुन्दर नैनवारिमिव दिव्यतेजसम् । शैलराजमिव धैर्यशालिन वेद्मि वेङ्कटपति महीपतिम् ॥१९०॥

## शाहिजहान

भूभृन्मौलितटीषु वर्षति महाधाराधरेऽस्मिनसौ जाता भूप सरस्वती विजयिनी कल्लोलिनी पावनी । श्रीमच्छाहि-जहा ब्रवीमि तदिद माहात्म्यमस्या कथ यस्या मज्जनि पङ्कजीयति शिरस्तन्मूर्धजो लीयति ॥ १९१ ॥

## सिन्धुराधीश्वर

अशर्मदहन वल्कटुकटाक्षरूक्षेक्षणक्षणक्षपितशात्रवे जयति सिन्धुराधीश्वरे । वय न बहु मन्महे निजभुजानमद्गाण्डिव-च्युतास्त्रशिखिताण्डवज्वलितखाण्डव पाण्डवम् ॥ १९२ ॥

## हम्मीर

मुञ्चति मुञ्चति [६]कोष भजति च भजति प्रकम्पमरिवर्ग । हम्मीरवीरखड्गे त्यजति त्यजति क्षमामाशु ॥ १९३ ॥ मा चक्र चक्रिविरहज्वरकातरो भू सङ्कोचमम्बुज न याहि न यामिनी-यम् । हम्मीरभूपहयपादविदीर्णभूमीरेणूत्करैरयमकारि दिवान्धकार ॥ १९४ ॥

---

## राजविभूषावर्णनम्

यश पटोऽयमद्भुतो न ते महीप कञ्चुक । सुपुण्यकर्म भास्पदो जयप्रद सुरक्षणम् ॥ १ ॥ प्रज्ञातृतीयोज्ञविलो चनस्य भूत्योज्ज्वलस्येश्वरकामदातु । कामारिमुत्सृज्य मुदा सकामा उष्णीषगङ्गा तव भाति मूर्ध्नि ॥ २ ॥ चित्राभिरस्योपरि मौलिभाजा भाभिर्मणीनामनणीयसीभि । अनेकधातुच्छुरिताश्मराशेर्गोवर्धनस्याकृतिरन्वकारि ॥ ३ ॥ तमङ्गदे मन्दरकूटकोटिव्याघट्टनोत्तेजनया मणीनाम् । वहीयसा दीप्तिवितानकेन चकासयामासतुरुल्लसति ॥ ४ ॥ शिरोवेष्टनव्याजतस्ते मुखेन्दो पर पक्षपाताद्ग्रसत्येव राहुम् । स्पा मूर्ध्नि बद्ध कचच्छद्मजाल शशाङ्कोऽङ्कहीनो विभात्येष राजन् ॥ ५ ॥ ताराधिनाथमभिजित्य मुखश्रि-याद्धा राजस्त्वया पदककैतवतो व्यलम्बि । वन्दीकृता इव तदीयवधूसमूहा हारच्छलेन तव वक्षसि भान्ति नूनम् ॥ ६ ॥ धवलकुसुमभास्वत्कञ्चुकस्योपरिष्टात्कनकपरि-करेण भ्राजसे राजराज । शरदि घनगणोद्यद्विद्युदु-द्दामरेखाकलित इव धरेन्द्र प्रोन्नतो विन्ध्यशैल ॥ ७ ॥ स्वभावारक्तश्रीनखरसुषमानद्धकनकस्फुरद्विद्युद्राजत्कटकयुग-लाभ्या तव करौ । विभात काश्मीरद्रवविलुलितारविन्द-विजये हृते स्वर्गद्वारार्गल इव विभो द्विटम्भितिकृते ॥ ८ ॥

---

## गजप्रशंसा

नीता कुम्भस्थलकठिनता कामिनीनामुरोजैस्तेय धृत्वा धृतमणिगणै कञ्चुकैराबृतैत्र । इत्याख्यातु नरपति-गृहद्वारि कुम्भीन्द्रडिम्भा शुण्डादण्डैर्वपुषि बहुला धूलि मुद्धलयन्ति ॥ १ ॥ सिन्दूरद्युतिमुग्धमूर्धनि धृतस्कन्धावधि-श्यामिके व्योमान्तस्पृशि सिन्धुरेऽस्य समरारम्भोद्धुर धावति । जानीमो नु यदि प्रदोषतिमिरव्यामिश्रसध्याधिये-वास्त यान्ति समस्तवैरिवृजभुजातेज सहस्राशव ॥ २ ॥ एतद्गन्धगजस्तृषाम्भसि भृश कण्ठान्तमज्जत्तनु फेनै पाण्डुरित स्वदिक्करिजयक्रीडायश स्पर्धिभि । द तद्गन्ध-जलानुविम्बनचतुर्दन्त कराम्भोर्वमिव्याजादैवमुनल्लभे-न विरह निर्वापयत्यम्बुधे ॥ ३ ॥ स्वीयोद्दान-प्रग धप्रकुपितहृदयोत्तारितोद्दण्डशुण्डैरुद्गच्छत्पुच्छगुच्छप्रति-करटिधिया सिन्धुरैर्धावमाने । तत्पादन्यासनम्रीभवदचल-भरोद्भ्रान्तिधाराचघूर्णत्पारावाराम्बुपूर्णा धरणिरजितरा शङ्क-माना चकम्पे ॥ ४ ॥

---

## तुरगप्रशंसा

मेखलीयति मेदिन्या ककुभ कङ्कणीयति । मण्डली-स्तुरग कुर्वञ्जगत कुण्डलीयति ॥ १ ॥ धावन्तमनु धावति हरिण तव वाजिन । नाभिनिर्मुक्तकस्तूरीलुब्धा इव समीरणा ॥ २ ॥ अनूनवेगादयमद्वितीयश्छायातुरगा दपि लज्जमान । खुरोद्धतैर्वीर तुरगमस्ते रजोभिरद्धा-पतिमावृणोति ॥ ३ ॥ प्रयातुमस्माकमिद कियत्पद धरा तदम्भोधिरपि स्थलायताम् । इतीव वाहैर्निजवेगदर्पितै पयोधिरोधक्षममुद्धत रज ॥ ४ ॥ इयती जगती कियती

---

१ दकारे मकारम् २ इह पथे चतुपथ आचाझरत्याग ३ विष्णु ४ हरम् ५ मदनशासकत्वात् ६ पिधानम्, पक्षे,-भाण्डागारम् ७ उल्लसनम्, पक्षे,-प्रकृष्टकम्पम् ८ क्षान्तिम् पक्षे,-पृथ्वीम् ९ चक्रवाकीविरहातुर-

१ अभ्रकपे २ अनर्गल इत्यर्थ ३ क्षत्रिय ४ सूर्या- ५ प्रतिबिम्बेन ६ करटीश्वर इत्यर्थ ७ ऐरावतेन ८ मध्ये-

भविता नमिता न न चानिति चाति द्य । नियदननारिदण रणभूमिमृगानिव तनमातनुत ॥ ५ ॥ विमदारवग सुर सर्गायत सुरङ्गा इवाङ्गानि सवोदयत । अटतो टटतो नट तोमरनत्सुरा सुङ्गा पुर गाहयति ॥ ६ ॥ अगजितगतागत तुरगधूल्याउरिव क्षणानुनय-गीतल प्रभवेकेलिरिधरिर । सुद्वत्त्मग्णोत्तेभाद्दशा सुरोगरिव त्वगवतुरगरिट धरणिचरमारम्यते ॥ ७ ॥ निर्मम सुरमण्डले परिमित मध्ये लघु ग्णयो स्कन्धे मधुरप्रमाणनुगनि स्निग्ध च रोमोद्गमे । पीन पश्चिम पार्श्वयो पृथुतर पृष्ठे प्रधान जवे राजा वाजिनमारुरोह सकलैर्युक्त प्रशस्तगुणै ॥ ८ ॥ धूलीभिर्दिवसेऽपि यत्र बधिरय नाना तुरगा रवेर्गति सत्वर सजयजवजये मोतुमु णमस्तु । धर्माराधनमनियुक्तनगता गतानुनाधिष्ठित नाकोत्साहमिवाद्रिविनि पदा स्पृशु तुरगोऽपि गाम् ॥ ९ ॥ जात मानरगाम पुटयन्मोतमर्ती नृपाय भिपु पल्व ल्यन्व । निटयदभूमण्डल तोयन । गार सदायन्दिर चपन्नेत्रैलोक्य मोदयहेलारम्भयोर्यो हयलव वषकार गिरा गोचर ॥ १० ॥ तदा गामिन सस्पृशति नि-निर्वाणगतन्तो मुहुरातेवमिन आनयमुतानीवाध्यापय न्तोऽनिलात् । देव स्वीयरसुरागदीणसुधाधूलीवितान दल-गलयो नटा पटिष्यति दि वलयति गहानर ॥ ११ ॥

---

## खड्गप्रशंसा

वणयानि विमल्ग्रमम्भ मि त्वदीयकरवालवर्तिन । एति यत्र मनसन्दर्शी दुर्ति निखिलद्विपुटमौक्तिक यग ॥१॥ नद्दवारि भवत दिसुच्यते लोचनोदधिवालिवारिवतल । यत्र राजति निवेशित त्वया राजहंसमनिवहोपम यग ॥२॥ न पक्षवृत्तिन सुपक्षवृत्तिनिपक्षवृत्ति करवालधूम । तथापि ते भूमिपत जाला प्रतापवह्निप्रमिति करोति ॥ ३ ॥ रिपुश्रिय किं कचमचयोऽय प्रतापवह्ने किमु धूमराजि । विलोक्य यस्यानि कृपाणरेखा जनलक्ष्यते रणेषु ॥ ४ ॥ मय यस्योपनमप्य चिन रणे रणे यस्य कृपाणलेखा । तमाम्भोग शरदिन्दुपाण्डु यशस्त्रिलोक्याभरण प्रसूते ॥५॥ दर्पाधवगवगनदुन्दगाटकूटसनाहिझघनोनितशोण गोचि । वीरैर्यो मे सुधि वीपक्षावशान्ति काली-यदाउ इव यस्य कर कृपाण ॥ ६ ॥ धाराधरस्त्वदसिरेष नरेन्द्र चित्र वर्षन्ति वरिवनिताजनलोचनानि । कोऽपि न सततममलितहिवेऽन्य दारिद्यमस्युदयति प्रतिमार्थि-वानाम् ॥ ७ ॥ कुरगाक्ष्या वेणी सुभग विपरीते रतिविधा-वविरुद्ध दृष्ट्वा किमपि विरतन्तीमनिमिष । अपिमीर युष्मनदन्दरवाप्यतिस्र खलखेव लन्धो विरमति परी-रम्भरमसात् ॥ ८ ॥ कृपाणीय काली तव रिपुवधू क्षीर-मनिश पिबन्ती व्यालीव प्रथयति तथा दुर्निवहतान् । यथा दूरात्स्वा स्फुरणमपि समाव्य सहसा विमुञ्चति प्रोढग्रहणभृतोऽपि प्रतिमदा ॥ ९ ॥ राजवीर विपक्ष लक्षसुनपूर्वपथ्यदीक्षागुरु सङ्ग्रामाध्वरकर्ममर्मकुशल प्रत्यर्थि-पृथ्वीभुजाम् । प्राणानर्थमणेर्मयापहरण नामारि मितु प्रभो कृपेदेन तवेति दिव्यमपिबल्येग स खड्ग पर ॥१०॥ असावर्भिभुजग सकोशविवराकृष्ट स्फुरत्कृष्णिमा कल्पो-न्मीलद्दरालरालीलललसेषा भिये नृभुजाम् । सङ्ग्रामेषु निजाङ्गुलीनवाहामिडौषधाधीरथ पर्वसे विनिवेश्य जाड्य-मिता कैर्नाम नालम्बिता ॥ ११ ॥ भूभृन्मालितटाधु दानिश्रमारम्भोऽयमम्भोधरस्त्वत्खड्ग प्रतिपक्षपङ्कपटल प्रक्षाल्य धारया । युद्धकुद्धविरुद्धसिंधुरगण्डदण्डस्पृप्रस्त लमुक्ताभि करकाभिराशु समरे क्षोणीतले वर्षति ॥ १२ ॥ आश्चर्य समराम्बरे रिपुवधूप्रतापार्कयो सर्वग्रासमय सहेव तनुते त्वत्खड्गराहु क्षयम् । किं चान्यत्सुरलोकनि-र्भय भवास्तमिस्रमहत्सुत्सवे गृह्णाति लज्जतामकम्पहृदयो गत्वा मनसा मुह ॥ १३ ॥ देव त्वत्कपत्रकोशविगर्भ सान्निमालामसि वधव्योद्गटधूमकेतुमपरे त्वद्वैरिवामभ्रुवाम् । वेणीं कालदधो प्रतापमृगमुग्धूम च केचिज्जगुर्नये काल-भुजङ्गवल्लीमिहालाहल्यापृता ॥ १४ ॥ निस्ताया वीर कण्ठस्थलमहलगन्धद्रक्तधारास्तुर्ङ्गमाद मातगकुम्भोद्गलनवि-छलितैर्मौक्तिकै पुष्पितायाम् । सङ्ग्रामोद्यानभूमौ तुरासुर-पुटोत्वातकृष्टवरसाया जात ते खड्गवल्लया फलमतुल रसास्वादहृद्य जयश्री ॥ १५ ॥ सर्पीवेषा कृपाणी तव भुजमुपगताभावत सा यदा सद्य हृत्वारिकण्ठच्युतरुधिरनो घोरमभ्यानहन्ती । दष्पद्दानाम्बुपूरोल्कटकरिघटनाकण्ठ-गैलेषु लीना सुते सद्य किल्ण्डान्यतिविमलगलद्धारिमुक्ता-च्छलेन ॥ १६ ॥ लेखन्ती व्योमगर्भे निशि निशि मुहु-र्निपतन्ती हरन्ती शश्वच्चैद्वाधवापनखिलजनमनोविस्मय

---

१ कटुरिपुवनिता इष्टे प्रतिबिम्बमिन्दर्श २ तवकरप्रसिन दरा- ३ वधोलसधिरवो दधव ४ रणे धरैमाधवनारिणे ५ धनुर्विरवादिरिदरगूधवदनमिदैरन्वकार ६ सुवह्, रङ्ग-पेतुक 'गोपकामान्तिर्भूमि मोक्षिद न वग खड्ग' इति निदेश दिति भवर

१ वकरिमाजा २ प्रकटदुल्गगीन्दिय ३ नर्मधम् ४ सिरवैदग

वर्षयन्ती । यस्य स्फारासिधारा तटिनि तरला वैरिकण्ठोपकण्ठं प्राप्ता सद्यो नदीनं प्रणयमुकुलिनी मोदमाविष्करोति ॥ १७ ॥ चूडापीडाभिरामं स्फुरदुरुमणिभिर्मुद्रिकाकल्पभूतद्दोर्दण्डे कुण्डलीन्द्रस्तव जयति जगन्मण्डलाधार एष । क्षीरस्थाल्यारिकीर्तिं झपदि समुदितां पातुकामं प्रसर्पज्जिह्वाग्रं विभ्रन्न चपलयति चमत्कारिणीं खड्गधाराम् ॥ १८ ॥

## राजयात्रावर्णनम्

प्रयाणे तव राजेन्द्र मुक्ता वैरिमृगीदृशाम् । राजहंसगतिं पद्भ्यामाननेन शशिद्युतिः ॥१॥ दिङ्नारीणां स्पृशत्यङ्गं रज सद्दूषिताम्बरम् । प्रस्थाने नृपते यन्तोऽपयेयान्ति रजो घृणा ॥ २ ॥ त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् । न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥ ३ ॥ यात्रासु यस्य ध्वजिनीभरेण दोलायमाना सकला धरित्री । आक्रान्तिबाधिच्छितपृष्ठपीठमकर्मठं कूर्मपतिं चकार ॥ ४ ॥ अस्य प्रयाणेषु समग्रशक्तेरग्रेसरैर्वाजिभिरुत्थितानि । कुर्वन्ति सामन्तशिखामणीनां प्रभाप्ररोहास्तमयं रजांसि ॥ ५ ॥ यस्य यात्रासु बलोद्धूतं रजः स्फुरत्प्रतापानलधूमशङ्कितम् । तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥ ६ ॥ त्वय्यागते किमिति वेपत एष सिन्धुस्त्वं सेतुमन्थकृदन्त किमसौ बिभेति । द्वीपान्तरेऽपि न हि तेऽस्त्यवशंवदोऽद्य त्वा राजपुङ्गव निषेवत एव लक्ष्मीः ॥ ७ ॥ त्वयि प्रचलति प्रभो तुरगवल्गनासु स्फुरद्धरावलयधूलिभिः सकलमेव कीर्णं नभः । निशाकरहयावली निरवलम्बसंचारतः श्रमापनयनाय किं वसुमतीयमूर्ध्वं गता ॥ ८ ॥ चोली चोलीन तु कथ्यते गुर्जरी जर्जराङ्गी भूर्जात्रा न त्रिशाखी शिपि । मालवी सालनीधिम् । नो संगीतं रचयति मनाग्गङ्गपशीबृशाङ्गी नाङ्गी रागं रहसि तनुते भूपते त्वत्प्रयाणे ॥ ९ ॥ देव त्वद्विजयप्रयाणनिलसत्सद्वाजिराजिव्रजक्षुण्णक्ष्मातललीनपांसुपटलव्यासोऽतिमेषेक्षणः । सुत्रामा बहु मन्यते फणिपतिः पातालमूलस्थितं सोऽप्युद्दामकरीन्द्रदुर्धरभरभ्रान्तः सहस्रेक्षणम् ॥१०॥ देवे दिग्विजयोद्यते धृतधनुर्वैल्यार्थसीमन्तिनीवैधव्यव्रतदायिनि प्रतिदिशं क्रुद्धे परिभ्राम्यति । आसां गन्यनितम्बिनी रतिरपि प्रायो न पौष्पं करे भर्तुर्धर्तुमदामदाघमधुपीनीलीनिचोलं धनुः ॥ ११ ॥ देव त्वद्विजयोद्यमे हरिखुराग्रोतक्षतक्ष्मातलात्प्रोद्भूते रजसां परागपटले दिक्चक्रमाक्रामति । अक्ष्णां पङ्क्तिशतानि निर्दृति निजहृत्पद्वय निन्दति स्वां निरवलनिमेषतां परिपतद्बाष्पाम्बुधारो हरिः ॥ १२ ॥ युष्मद्वाजिजिताजिराजिचरणक्षेपक्षतेर्मेदिनीं मङ्क्षु क्षोणिमवेक्ष्य सिञ्चति घनैर्भर्ता नदीनां जलैः । आशामण्डलसु रटघ्वजपटैर्वातं तनोति द्रुतं चञ्चच्चञ्चलरेणुराशिविनिमित्रनेतुं दिवं गच्छति ॥ १३ ॥ धृतांधोरण देव वासवकरी पङ्केन लिप्तः कथं नीतः स्वर्गतरङ्गिणीजलमसौ तत्रास्ति पङ्कः कुतः । सर्वाशाविजयोत्सवं प्रति कृतोद्योगे धराधीश्वरे स्फायन्ते करिकर्णतालपरागोद्धताश्वखुरेणवः ॥ १४ ॥ देव त्वद्गजवाजिपत्तिपटलप्रोद्भूतधूलीभरैराकाशं वसुधायते मेरकरं सोमायते निष्प्रभः । किं चाधो भरकुब्जितः फणभृतां नाथः स कूर्मायते कूर्मा गोग्रतीयते निमषर रात्रीयते वासरः ॥ १५ ॥ वेल्लत्पक्षतिराजहंसयुवतिर्भुक्तमृणालाङ्कुराम्यत्षट्पदभूरिझाङ्कृतिपतच्चक्रीकृताक्षेद्युति । पर्यस्तत्वपयःसहृति पतद्विरतिर्विगभिति प्रस्थानध्वजवाततोलमजनि स्वर्गापगायाः पयः ॥ १६ ॥ सत्यं त्वं पुरुषोत्तमोऽसि नियतं तत्रापि रामो भवान्प्रस्थाने तव लक्षयेव रमतिं व्यक्तं यतो मेदिनी । प्राक्पूर्वाचलपश्चिमाचलकुचावावृण्वती प्रोच्छलद्धूलीरावलपयोधिलहरीचेलाञ्चलेऽञ्चलेन ॥ १७ ॥ प्रस्थाने तव भूमिपाल वसुधा जाता रजोदोषगा त्वद्विद्वारपयोधरोऽध्वाद्भुत चपलपोऽध्धूदकम् । दृङ्ज्ञाश्वासहिमापमौक्तिकगणान्वामा किरन्ति द्विपस्त्वचोत्पात इति प्रतापदहने यास्यन्ति ते शत्रवः ॥ १८ ॥ एतद्वत्तासिघातस्रवदसृगसुहृ-

---

१ राजकुमारा २ सेतुश्च मन्थश्चेति ३ इन्द्र ४ शङ्कर ५ यदि मम भर्ता भागो धनुर्धारयिष्यति तदाय रात्र मद्भर्तारं धनुर्भरतादृतिष्यतीति भयात्स्वगृह्य धनुः ग्राहयदिति भावः

१ शेष २ समुद्र ३ इन्द्रशतानि ४ यदश्वैतावद्रजः समुच्छन्ति येन तस्य सहस्रनेत्राणि तिरोहितानि बभूवुस्तेन यदि मम नेत्रसहस्रं नाभविष्यत्तदा चैतावद्गोकिरस्तत्र नापतिष्यत्तो नेत्रसहस्रं मम निष्फलमभवदिति ५ सत्यपि नेत्रसहस्रे तच्चिरोधानाय यदि हस्तसहस्रमप्यभविष्यत्तदा हस्तैः सर्वनेत्राच्छादनं कर्तुं शक्यमतो मम पाणिद्वयं व्यर्थमेवेति ६ यतो मया देवत्वादनिमेषता पक्ष्मपातनाभावः किमिति प्राप्त यस्मादश्वपुर्वारापटलान्तस्तत्त्वमभूयदि च मे नयनेष्वनिमेषता नाभविष्यत्तदा रजःपातो ऽपि नाभविष्यदत स्वामनिमेषतां निन्दतीति भावः ७ रजःस्पर्शसमुत्पन्नपीडया निर्गच्छन्ती नेत्रेभ्यो बाष्पाम्बुधारा अश्रुजलप्रवाहो यस्य सः ८ इन्द्र ९ अश्विनीकुमारे वेषम् १० वाहनम् ११ त्वद्वाजिसेनापतिविपुलसीपच्चर्मदांदाकाशमपि रजोमयं बभूवेति भावः १२ चण्डांशु १३ यथा कूर्मः स्वं शरीरं संकोचयति तथा शेषोऽपि त्वदादिनीभरेण संकुचितशरीरोऽभूदिति भावः १४ संकुचितशरीरोऽपि मत्स्यवत्स्वयोऽभूदित्यर्थः १५ यत्र त्वाद्गमत्वद्वादिन्या धूलीपटल समुच्छन्ति येन दिनमप्यन्धकारवशाद्रात्रिरेवाभवदिति भावः १६ चक्रवाकी

द्वर्शमात्रे धनैतदोरुद्दामप्रतापज्वलज्ज्वलनमिलद्धूमभूमभ्रमाय । एतद्दिग्जेत्रयात्रासमसमरभर पश्यत कस्य नासीदेतद्भासीत्खाजिव्रजखुरजरजोराजिराजिस्थलीषु ॥ १९ ॥ तत्तद्दिग्जैत्रयात्रोद्धुरतुरगखुराग्रोद्धतैरन्धकारं निर्वाणारिप्रतापानलजमिव सृजत्येष राजा रजोभि । भूगोलच्छायमेतायमयं गणितविदुद्भेयग्रायो भियैभूदेतत्कीर्तिप्रतानैर्विधुमिरिव युवे राहुराहूयमान ॥ २० ॥ गा धारा गुर्जरादारास्त्वयि चलति गलद्वाष्पधारा निहारा रागत्रासान्वगारा क्षितिपकुलमणे गुर्जरा जर्जराशा । तेलङ्गाम्त्यक्तलिङ्गास्त्रिभुवनतिलक क्ष्यि दङ्गा कलिङ्गा मोरङ्गा मुक्तरङ्गा सपदि समभवन्वीर गङ्गाविहङ्गा ॥ २१ ॥ काचित्कीर्णा रजोभिर्दिवमनुविदधो मन्दवक्त्रेन्दुलक्ष्मीरश्रीका काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वा । भ्रेमुर्वात्या इवान्या प्रतिपदमपरा भूमिवत्कम्पमाना प्रस्थाने पार्थिवानामशिवमिति पुरोभानि नार्यशसु ॥ २२ ॥ जाने युष्मत्प्रयाणे क्षितितिलक रजोयोगदोपादशेषा दिग्योषा स्नाति सद्यस्त्वदरिनृपवधूनेत्रनीराप गासु । सगम्य त्वत्प्रतापैस्तदनु किमु दधुर्दोहन देव तासा प्राची प्रात प्रसूते यदियमुरुमहोऽखण्डमार्तण्डबिम्बम् ॥२३॥ घूर्णन्ते तूर्णमेतत्कुलधरणिभृतो दिग्द्विपा दिग्विदिक्षु क्षुभ्यति क्षोभयति क्षितिमतिमृदितो मर्मणा कूर्मराज । प्रस्थाने यस्य गर्जत्करटिघनघटासभ्रमन्यग्दुर्वीसुर्वी दर्वीकरेन्द्र कलयितुमुदितश्रायमार्तिं बिभर्ति ॥ २४ ॥ त्वत्खद्वाजिराजिप्रसरखुरपुटप्रोद्धतैर्धूलिजालैरालोकालोकभूमीधरमतुलनिरालोकभाज प्रयाते । विश्रान्ति कामयन्ते रजनिरिति धिया भूतले सर्वलोका कोका क्रन्दति शोकानलविकलतया कि च नन्दन्त्युलूका ॥ २५ ॥ इन्द्र प्रक्षुब्धचित्तो दिशि दिशि सकलादिक्पतीन्सावधानान्कुर्वन्वज्रच्छपाणि सुरवरवलिता देवसेना निगृह्य । स्वर्गद्वारे यदी योद्धतबलनिहतप्रौढढक्कानिनाद श्रुत्वा तिष्ठ प्रकम्पत्कुच कलशतटीकिंनरीगीयमान ॥ २६ ॥ आजौ त्वद्वाजिराजिप्रखरखुरतरन्यासरीलाभिरुर्व्या दीर्णाया देव निर्यत्त्विरलमरीपाल पातालवह्नि । अम्भीयाद्विश्वमेव प्रतिनृपतिवधूनेत्रधाराम्बुधारावारा यद्येनमारादरिकुलदमन द्राङ् न निर्वापयेयु ॥ २७ ॥

### पताका

भयेन कृष्णान्यरणानि रागात्पाण्डूनि धातादिवियोगभाजाम् । द्विषां मनासि ध्वजकैतवेन लोलानि मोस्त्वा नृप सश्रयन्ति ॥ २८ ॥

---

१ वेगत २ सेनामुखम् ३ रणभूमिषु ४ उच्चण्डल ५ करम् ६ गणितशास्त्रवेद ७ ज्योतिःशास्त्रप्रमाणक यद्राशोर्भूच्छायामस्य तदेतस्कीर्तिं च दर्शयेत्युत्प्रेक्षा

### दुन्दुभि

गङ्गाम्भसि सुरत्राण तव निःसाणनि स्वन । स्नातीवारिवधूवर्गगर्भपातनपातकी ॥ २९ ॥ ब्रह्माण्ड प्रविशन्स्व भूधरगुहासुप्तान्हरीन्बोधयन् गर्भानैरिवधूव्रजस्य नृपते निष्पात्य हा पातकी । कीलाल परिशोष्य च प्रतिभटाना तेजसा तेऽद्भुत शोद्धु विष्णुपद स्पृशत्यधिपयोराशि पुतो दुन्दुभि ॥ ३० ॥ पौरीन्द्राणा धुरीणैरवनिधरगुहागतत प्रोच्छलद्भि स्वापभ्रशापराधप्रचलितनयनप्रान्तमाकर्ण्यमान । त्वत्प्रस्थानान्तरचत्प्रलयजलधरध्वानधिक्कारधीरो घृष्टक्षीराम्बुतीरो जगति विजयते दुन्दुभिद्वन्द्वनाद ॥ ३१ ॥

### गवाक्षविलोकनम्

आलोकमार्गे सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्य । बद्धु न सभावित एव तावत्करेण रुद्धोऽपि च केशपाश ॥ ३२ ॥ प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव । उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्का पदवीं ततान ॥ ३३ ॥ विलोचन दक्षिणमञ्जनेन सभाव्य तद्वञ्चितवामनेत्रा । तथैव वातायनसनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ३४ ॥ जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्ना न बबन्ध नीवीम् । नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वास ॥ ३५ ॥ अर्धाचिता सत्वरमुत्थिताया पदे पदे दुर्निमिते गलन्ती । कस्याश्चिदासीद्रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ३६ ॥ स्तन धयन्त तनय विहाय विलोकनाय त्वरया व्रजन्ती । सप्रस्नुता या पदवीं स्तनाभ्या सिषेच काचित्पयसा गवाक्षम् ॥ ३७ ॥ अभिवीक्ष्य सामिकृतमण्डन यतीः कररुद्धनीविगलदशुका स्त्रिय । दधिरेऽधिभित्ति पटहप्रतिस्वनै स्फुटमट्टहासमिव सौधपङ्क्तय ॥ ३८ ॥ रभसेन हारपददत्तकाञ्चय प्रतिमूर्धज निहितकर्णपूरका । परिवर्तिताम्बरयुगा समापतन्वलयीकृतश्रवणपूरका स्त्रिय ॥ ३९ ॥ व्यतनोदपास्य चरण प्रसाधिकाकरपल्लवाद्रसवशेन काचन । द्रुतयावकैकपदचित्रितावनिं पदवीं गतेव गिरिजा हरार्धताम् ॥ ४० ॥ व्यचलन्विशङ्कटकटीरकस्थलीशिखरस्खलन्मुखरमेखलाकुला । भवनानि तुङ्गतपनीयसक्रमक्रमणक्वणत्कनकनूपुरा स्त्रिय ॥ ४१ ॥ कस्युगमपद्ममुकुटापवर्जितै प्रतिवेश्म लाजकुसुमैरवाकिरन् । अवदीर्णशुक्तिपुटमुक्तमौक्तिकप्रकरैरिव प्रियरथाङ्गमङ्गना ॥ ४२ ॥ नलिनान्तिकोपहितपल्लवश्रिता व्यवधाय चारु मुखमेकपाणिना । स्फुरिताङ्गुलीविवरनिःसृतोल्लसद्दशनप्रभाङ्कुरमजृम्भतापरा ॥ ४३ ॥

---

१ 'सुल्तान' इति पदस्य शोधनं सुरत्राण इति २ भिन्नानाम् ३ अर्धम् ४ गच्छन्ती

## रणसामग्री

अथोच्चकैर्जरठकपोतकंधरातनूरुहप्रकरविपाण्डुरद्युति । बलैश्चलच्चरणविधूतमुच्चरद्धनावलीरदचरत क्षमारजः ॥ १ ॥ निषङ्गिभिर्भृशमितरेतरं क्वचित्तुरंगमैरुपरि निरुद्धनिर्गमाः । चलाचलैरनुपदमाहताः खुरैर्विबभ्रमुर्थिरमध एव धूलयः ॥२॥ गरीयसः प्रचुरमुखस्य रागिणो रजोऽभवद्व्यवहितसत्त्वमुत्कटम् । सिसृक्षतः सरसिजजन्मनो जगद्बलस्य तु क्षयमपनेतुमिच्छतः ॥ ३ ॥ पुरा शरत्क्षतिजनितानि संयुगे नयन्ति नः प्रशममसृञ्जि पङ्कताम् । इति ध्रुवं व्यवसितय ध्रुवं व्यवधि पुरात्तभीतयः खमुच्चकैरनलसखस्य केतवः ॥ ४ ॥ क्वचिल्लसद्घननिकुरम्बकर्बुरः क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः । क्वचिच्छरच्छशधरखण्डपाण्डुरः खुरक्षतक्षितितलरेणुरुच्चयः ॥५॥ महीभृतां महति दिगन्तदन्तिनामनीकजे रजसि मुखानुषङ्गिणि । विसारितामजिहत कोकिलावलीमलीमसा जलदमदाम्बुराजयः ॥ ६ ॥ शिरोरुहैरलिकुलकोमलैरमी मुधा मृधे मृषत युवान एव मा । बलोद्धतं धवलितमूर्धजानिति ध्रुवं जनाञ्जरत इवाकरोद्रजः ॥ ७ ॥ सुसंहतैर्दधदपि धाम नीयते तिरस्कृतिं बहुभिरसंशयं परैः । यतः क्षितेरवयवसम्पदोऽणवस्त्विषां निधेरपि वपुरावरीषत ॥ ८ ॥ द्रुतद्रवद्रथचरणक्षतक्षमातलोल्लसद्बहुलरजोऽवगुण्ठितम् । युगक्षयक्षणनिरवग्रहे जगत्पयोनिधेर्जल इव मग्नमाबभौ ॥ ९ ॥ समुल्लसद्दिनकरवक्त्रकान्तयो रजस्वलाः परिमलिताम्बरश्रियः । दिगङ्गनाः क्षणमविलोकनक्षमाः शरीरिणां परिहरणीयतां ययुः ॥ १० ॥ निरीक्षितुं नियतिसमेत्य कौतुकात्पराक्रमं समरमुखे महीभृताम् । रजस्ततावनिमिषलोचनोत्पलव्यथाकृति त्रिदशगणैः पलाय्यत ॥ ११ ॥ विषङ्गिणि प्रतिपदमापिबत्यपो हृताचिरद्युतिनि समीरलक्ष्मणि । शनैः शनैरुपचितपङ्कभारिकाः पयोमुचः प्रययुरपेततृष्णताः ॥ १२ ॥ नभोनदीव्यतिकरधौतमूर्तिभिर्वियद्गतैरनधिगतानि लेभिरे । चलच्चमूतुरगखुराहतोत्पतन्महीरजःस्नपनसुखानि दिग्गजैः ॥ १३ ॥ गजव्रजाक्रमणभरावनम्रया रसातलं यदखिलमानशे भुवा । नभस्तलं बहुतरतां रजस्तनोऽनगत्वरं दिनकृता स्फुटम् ॥ १४ ॥ समन्ततः सततविसारिणा पूरिता महीभृता करजसा महागुहा । रहत्वपानिभुरवधूरताथिना नभःसदामुपकरणीयतां ययुः ॥ १५ ॥ गते मुखच्छदपटसादृशीं दृशां पथःस्थिते दधति घने रजस्यपि । मदानिलैरधिमधुचूतगन्धिभिर्द्विपा द्विपानभिययुरेव रंहसा ॥ १६ ॥ मदाम्भसा परिगलितेन सप्तधा गजाञ्जनक्षमितरजश्चयात्तत्र । उपर्यवस्थितघनपांसुमण्डलानलोकयत्ततपटमण्डपानिव ॥ १७ ॥ तूणीरबन्धपरिणद्धभुजान्तरालमाकर्णलम्बिशिखिपिच्छकलापधारि । कोदण्डपाणि निनदत्प्रतिरोधकानामापातदुष्प्रसहमाविरभूदनीकम् ॥ १८ ॥ आदावेव गजेन्द्रमौलिविलसद्दण्डा पताकावली पश्चाद्वारणराजधोरणिरतिप्रोद्दामयोधाश्रिता । उद्दण्डध्वजलाञ्छिताप्यथ घनीभूता रथानां ततिस्तत्पश्चात्तुरगावली विजयते योधैः समं सर्वतः ॥ १९ ॥ योधैरेव वशीकृताः कथमपि प्रोद्दामरोषान्विता गाढध्वान्तधराधरा इव रणक्षोणीं समालम्बिताः । इष्यमीलितघूर्णितप्रतिदिशप्रक्षिप्तनेत्राञ्चला मन्दान्दोलितमौलयो मदजलैर्भान्ति द्विपानां गणाः ॥ २० ॥ आरूढक्षितिपालभालविगलत्स्वेदाम्बुसेकोद्धता भेरीझाङ्कृतिचाटकृतिचमत्कारोल्लसन्मानसाः । क्षुभ्यत्क्षोणितलं स्फुरत्खुरपुटं चञ्चच्चलत्केशरं सभ्रान्तविरोचनं प्रतिदिशं नृत्यन्ति वाजिव्रजाः ॥ २१ ॥ अन्यूनोन्नतप्रोन्नतिमानपृथवः पृथ्वीधरश्रीभृतस्तन्वन्तः कनकावलीभिरुपमां सौदामिनीदामभिः । वर्षन्तः शममानयन्तु पलसच्चञ्चत्कारलेखायुधाः काले कालियकायकालवपुषः पांसूत्करानम्बुमुचः ॥ २२ ॥ हेषाघोषैर्हरीणां जितघननिनदैर्बृंहितैः कुञ्जराणां ज्याघातोत्थैर्निनादैः पटुपटहरवैर्मर्दलोद्दामशब्दैः । प्राप्तैः कर्णोपकण्ठं मदगजनिवहस्कन्धघण्टाप्रणादैः शृङ्गाराय त्वरन्ते त्रिदशमृगदृशो वीरवर्गानुरक्ताः ॥ २३ ॥ सज्जन्तां कुम्भभित्तिच्युतमदमदिरामत्तभृङ्गाः करीन्द्रा युज्यन्तां स्यन्दनेषु प्रसभजितमरुच्चण्डवेगास्तुरंगाः । कुन्तैर्नीलोत्पलानां वनमिव ककुभामन्तराले सृजन्तः पादाताः संचरन्तु प्रसभमसिलसत्पाणयः पत्तयोऽपि ॥ २४ ॥

## रणवर्णनम्

तनुत्राणं तनुत्राणं शस्त्रं शस्त्रं रथो रथः । इति शुश्रुविरे विष्वग्गुद्गताः सुभटोक्तयः ॥ १ ॥ पत्तिः पत्तिमभीयाय रणाय रथिनं रथी । तुरङ्गस्थं तुरङ्गस्थो दन्तिस्थं दन्तिनि स्थितः ॥ २ ॥ मल्लानामानन्दनाधिष्ण्यो विग्रहे पुलकाङ्किते । आसीत्कवचविच्छेदो वीराणां मिलनां मिथः ॥ ३ ॥ निर्दयं खड्गभिन्नेभ्यः कवचेभ्यः समुच्छितैः । आसन्व्योमदिशाभूमिः पलितैरिव पाण्डुराः ॥ ४ ॥ खड्गा रुधिरसंलिप्ताः प्रचण्डानुकम्पासुराः । इतस्ततोऽपि वीराणां वैद्युतं वैभवं दधुः ॥ ५ ॥ गृहीताः पाणिभिर्वीरैर्निष्कोशाः खड्गराजयः । कान्तिजालच्छलादार्जो व्यहसन्मदा इव ॥ ६ ॥ खड्गा

---

१ वायोर्नभो भूमिनि रजांसि  २ मा श्रियमानाम्

---

१ परित्र  २ कुरूनमिदकैक्यचर्मनिकृनि–

शोणितसंदिग्धा नृत्यन्तो वीरपाणिषु । रजोघने रणेऽनन्ते विद्युतां विभ्रमं दधुः ॥ ७ ॥ शस्त्रभिन्नेभकुम्भेभ्यो मौक्तिकानि च्युतान्यधुः । आहवक्षेत्रमभ्युप्तकीर्तिबीजोत्कराश्रियम् ॥ ८ ॥ वीराणां विषमैर्घोषैर्विद्रुता वारणा रणे । शास्यमाना अपि त्रासादुद्धूताङ्कुशा दिशः ॥ ९ ॥ रणे बाणगणैर्भिन्ना भ्रमन्तो भिन्नयोधिनः । निममज्जुर्गलद्रक्तनिमग्नासु महागजाः ॥ १० ॥ खड्गनिर्लूनमूर्धानो निपतन्तोऽपि वाजिनः । प्रथमं पातयामासुरसिना दारितानरीन् ॥ ११ ॥ वीराणां शस्त्रभिन्नानां शिरांसि निपतन्त्यपि । अधावन्दन्तदष्टोष्ठभीषणान्यरिषु क्रुधा ॥ १२ ॥ शिरांसि वरयोधानामर्धचन्द्रहतान्यपि । आददाना भृशं पादैः श्येना व्यानशिरे दिशः ॥ १३ ॥ उत्क्षिप्ता अपि हस्तीन्द्रैः कोपने पत्तयः क्षणे । ते रिपूनहन खड्गपातैः स्वस्य पुरः प्रभोः ॥ १४ ॥ उत्क्षिप्य करिभिर्दूरं मुक्ता ये योधिनो दिवि । प्रापिजीनामभिर्दिव्याङ्गनाकण्ठपरिग्रहम् ॥ १५ ॥ भुजस्य दन्तिनः पत्तिर्निघृष्टोरसिना करम् । निर्भिद्य दन्तमुसलान्यारुरोह जिघृक्षया ॥ १६ ॥ खड्गेनामूलतो हत्वा दन्तिनोऽङ्घ्रिचतुष्टयम् । अपतिष्णोः प्रविष्टोऽपि पदातिर्निरगाद्द्रुतम् ॥ १७ ॥ करेण करिणा वीरः सुगृहीतोऽपि कोपिना । असिनाद्भुतहारात्तु तस्यैव स्वयमक्षतः ॥ १८ ॥ तुरङ्गी तुरगारूढं प्रासेनाहत्य वक्षसि । पततस्तस्य नाज्ञासीत्प्रासघातं स्वके हृदि ॥ १९ ॥ तुरङ्गसादिनि शस्त्रहतप्राणे गते भुवि । आक्रान्तोऽपि महावाजी नानम्नयनोऽत्यजत् ॥ २० ॥ द्विपा प्रासहतप्राणो वाजिपृष्ठदृढासनः । हस्तोद्धृतमहाप्रासो भटो जीवन्निवाभ्रमत् ॥ २१ ॥ खड्गेन शितधारेण भिन्नोऽपि रिपुणाश्वगः । नामूर्च्छत्कोपतो हन्तुमियेष च पतन्नपि ॥ २२ ॥ रथिनो रथिभिर्बाणैर्हतप्राणा दृढासनाः । कृतशार्ङ्गशरसंधानाः सप्राणा इव मेनिरे ॥ २३ ॥ मिथोऽर्धचन्द्रनिर्लूनमूर्धानौ रथिनौ रुषा । खेचरौ भुवि नृत्यन्तौ स्वकबन्धावपश्यताम् ॥ २४ ॥ पत्तिः पदातिं रथिनं रथेशस्तुरगसादी तुरगाधिरूढम् । यन्ता गजस्याभ्यपतद्गजस्थं तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥ २५ ॥ उत्थापितः संयति रेणुरश्वैः सान्द्रीकृतः स्यन्दनवंशचक्रैः । विस्तारितः कुञ्जरकर्णतालैर्नेत्रक्रमेणोपरुरोध सूर्यम् ॥ २६ ॥ रथो रथाङ्गध्वनिना विजज्ञे विलोलघण्टाक्वणितेन नागः । स्वभर्तृनामग्रहणाद्बभूव सान्द्रे रजस्यात्मपरावबोधः ॥ २७ ॥ आवृण्वतो लोचनमार्गमाजौ रजोऽन्धकारस्य विजृम्भितस्य । शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोऽभूद्रुधिरप्रवाहः ॥ २८ ॥

१ कुञ्जर १ गुरु २ नादन

स च्छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात्पवनावधूतः । अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवाबभासे ॥ २९ ॥ आधोरणानां गजसंनिपाते शिरांसि चक्रैर्निशितैः क्षुराग्रैः । हृतान्यपि श्येननखाग्रकोटिव्यासक्तकेशानि चिरेण पेतुः ॥ ३० ॥ तनुत्रजा वर्मभृतां विकोशैर्बृहत्सु दन्तेष्वसिभिः पतद्भिः । उद्यन्तमग्निं शमयांबभूवुर्गजा विनिद्राः करशीकरेण ॥ ३१ ॥ शिलीमुखोत्कृत्तशिरःफलाढ्या च्युतैः शिरस्त्रैश्चषकोत्तरेव । रणक्षितिः शोणितमद्यकुल्या रराज मृत्योरिव पानभूमिः ॥ ३२ ॥ केचिद्गदां केऽपि सचापबाणानन्ये कृपाणीमपरे च शूलम् । शक्त्यृष्टिमन्ये मुसलं परे च प्रोत्तानहस्ताः परिनर्तयन्ति ॥ ३३ ॥ सरोषमुद्दाङ्गनमध्यधावन्मत्तद्विपानामधिकोत्सुकानाम् । पादाभिघाताभिहताः पतन्ति रथाश्च योधाश्च तुरङ्गमाश्च ॥ ३४ ॥ रम्भातरूनुद्धतवातपूरा यथा तथा वारणयूथनाथाः । सङ्ग्रामभूमौ विनिपातयन्ति रथांश्च योधांश्च तुरङ्गमांश्च ॥ ३५ ॥ परस्परेण क्षतयोः प्रहर्त्रोरुत्क्रान्तवाय्वोः समकालमेव । अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः ॥ ३६ ॥ महास्वनः सैन्यविमर्दसम्भवः कर्णान्तमूलकषतामुपेयिवान् । पयोनिधेः क्षुब्धतरस्य मन्थनो बभूव भूमा भुवनोदरंभरिः ॥ ३७ ॥ महागजानां गुरुबृंहितैः शतैः सुहेषितैर्घोरतरैश्च वाजिनाम् । घनं रथानां पटुचण्डचीत्कृतैस्तिरोहितोऽभूत्पटहस्य निःस्वनः ॥ ३८ ॥ घनैर्विलोक्य स्थगितार्कमण्डलैश्चमूरजोभिर्निचितं नभस्तलम् । अयायि हंसैरभिमानसं घनभ्रमेण सानन्दमनर्ति केकिभिः ॥ ३९ ॥ विलोक्य धूलीपटलैर्भृशं भृतं द्यावापृथिव्योरलमन्तरं महत् । किमूर्ध्वतोऽधः किमधस्त ऊर्ध्वतो रजोऽभ्युपैतीति जनैरतर्क्यत ॥ ४० ॥ नोर्ध्वं न चाधो न पुरो न पृष्ठतो न पार्श्वतोऽभूत्खलु चक्षुषो गतिः । सूच्यग्रभेद्ये पृतनारजोभरे सुनिर्भरं प्राणिगणस्य सर्वतः ॥ ४१ ॥ उद्दामदानद्विपबृंहितैः शतैर्नितान्तमुत्तुङ्गतुरङ्गहेषितैः । चलद्ध्वजस्यन्दननेमिनिःस्वनैरभून्निरुच्छ्वासमिवाकुलं नभः ॥ ४२ ॥ महागजानां गुरुभिस्तु गर्जितैर्विलोलघण्टारणितै रणोज्ज्वलैः । वीरप्रमदप्रमदोर्ध्वचालितामादधिरे तता दिशः ॥ ४३ ॥ दन्तीन्द्रदानाम्बुधिरारिवीचिभिर्मदोऽपि नद्यो बहुताः पुपूरिरे । धरारजोभिस्तुरगव्रजैर्भृता पङ्कतामेत्य रजस्वलीकृतम् ॥ ४४ ॥ निम्नप्रदेशाः स्थलतामुपागमन्निम्नत्वमुच्चैरपि गुल्मसञ्चयम् । तुरङ्गमाणां व्रजतां खुरैः क्षितिध्रैर्गजेन्द्रैः परितः समीकृताः ॥ ४५ ॥ रथादिगन्तप्रतिघोषभीषणैर्महामहीभृत्तटदारणोल्बणैः । पयोधिनिर्धूननकेलिभिर्जगद्बभूव भेरीध्वनितैः समाकुलम् ॥ ४६ ॥ हतस्ततो वातविधूतचञ्चलैः पयोधिनागागमनैस्ववानुगैः । लघुका

ऽ।श्वारिंगिणीतुल्यैरमज्जि धूलीजलधौ नभोगतैः ॥ ४७ ॥ घण्टारवे रौद्रतरैर्निरन्तरैर्निस्वनैर्गर्जरवे सुभैरवे । मदद्विपाना प्रथयावभूरिर न वाहिनीना पटहस्य निःस्वना ॥४८॥ करालनाचाऽसुरीश्रमूरे सत्ताम्बरा वीक्ष्य रजस्वला दिशा । तिरोनभूरे गगने दिनेश्वरो रजोऽन्धकारे परितः धुतोऽप्यसौ ॥ ४९ ॥ आक्रान्तपूर्वा रभसेन सैनिकैर्दिगङ्गना व्योमरजोभिदूषिता । भेरीरवाणा प्रतिशब्दितैर्घनैर्जगर्ज गाढ गुरुमत्सरादिव ॥ ५० ॥ गुरुसमीरसमीरितभूधरा इव गजा गगन निजगाहिरे । गुरुतरा बहुधारिभराहता भुवमतीव नमन्त इवाभवन् ॥ ५१ ॥ सजममाते तावपायालपेशौ सेनाम्भोधौ धीरनादौ रयेण । पक्षच्छेदात् पूर्वमेकत्र देशे वाञ्छन्तौ वा विन्ध्यमलौ निलेतुम् ॥ ५२ ॥ पत्तिः पत्तिं वाजिमेयाय वाजी नागं नागः स्यन्दनस्थो रथस्थम् । इत्थं सेना वेल्लमन्येव रागाद्वैराङ्गा प्रत्यनीकस्य भेजे ॥ ५३ ॥ रथ्याघोषैर्बृंहणैर्वारणानामैक्यं गच्छन्वाजिना हेषया च । व्योमव्यापी सतत दुन्दुभीनामव्यक्तोऽभूदीक्षितैव प्रणादः ॥ ५४ ॥ रोपावेशाद्दच्छता प्रत्यमित्र दूरोत्क्षिप्तस्थूलबाहुध्वजानाम् । दीर्घासिर्यग्गजयन्तीसदस्य पादातानां प्रेजिरे गङ्गलेगा ॥ ५५ ॥ अयनाद धन्विभिर्निष्ठुराणि स्थूलामुष्टैर्मण्डलत्व दधति । आस्फाल्यन्ते कार्मुकाणि स्म काम हस्त्यारोहे कुञ्जराणां शिरांसि ॥ ५६ ॥ घण्टानादो निःस्वनो डिण्डिमाना मैनेयाणामारवो बृंहितानि । आमेत्यैव प्रत्यरोच गजानामुत्साहार्थं वाचमाधोरणस्य ॥५७॥ रोपावेशादाभिमुख्येन कौचित्पाणिग्राहं रहसैनोपयातौ । हित्वा हेतीर्मल्लयुद्धिवात प्रन्तौ बाहूबाहवि व्यासृजेताम् ॥ ५८ ॥ शुद्धा खङ्गं न कचिदासरन्तो दुराभुक्ता शीघ्रता दर्शयन्त । अन्तःसेन निद्विषामाविशन्तो मुक्तचर्म सायका वाजिताया ॥ ५९ ॥ आकम्प्याजेरभिमुखस्कन्धमुद्धरास्यायाथो वीतशङ्क शिरश्च । हेलालोला वल्मगत्यातिमत्त घर्मारोहन्मानमाज सुरेन ॥ ६० ॥ रोदोरन्ध्र व्यश्नुवानानि लोलैरङ्गप्रत्यातर्मापिते स्थानराणि । केचिद्दुर्गामेत्य सयविपैर्वा क्रीणन्ति स्म प्राणमूल्यं यशांसि ॥ ६१ ॥ वीर्योत्साहश्लाघि कृतार्थदान सङ्ग्रामोमानिना रञ्जितानाम् । अप्राताना शत्रुभिर्युक्तमुर्धं

श्रीमन्नाम श्रावयन्ति स्म सैन्या ॥ ६२ ॥ मिश्रीभूते तत्र सैन्यद्वयेऽपि प्रायेणाय व्यक्तमासीद्विशेष । आत्मीयाम्ने ये पेराय पुरस्तादभ्यावर्त्मा समुखो य परोऽस्मौ ॥ ६३ ॥ मद्धरनादद्धसद्विनीरै नीता काम गौरवेणावबद्धा । नीता हस्त चयविल्वा परण द्रोह् चक्रे कम्पचिम्भा कृपाणी ॥ ६४ ॥ नीत भेद धौतधाराभिघातादम्भोदाभे शात्रवेणापरस्य । मौक्तिकासिलीढगमार्गस्य मार्गो विद्युद्दीप्त कङ्कटे लक्ष्यत स्म ॥ ६५ ॥ आमूलान्तात्मायकेनायतेन स्यूते बाहौ मण्डलश्लिष्टमुष्टे । प्राप्यामला वेदनामस्तधैर्या दष्प्रद्रयवर्मे नान्यस्य पाणे ॥ ६६ ॥ भित्त्वा घोणामौय सेनाविरश्च स्थूलीभूतो गार्भजेण विद्ध । शिलाहेतोर्गाढ रञ्जन बद्धो हर्तुं वक्त्र नारमुर्भुर्गोऽपि ॥ ६७ ॥ निर्द्रीचीर्निक्षिप सैन्यसौचीगजान्त श्वापि दूर पयातम् । चक्रामैको मधुमिष्ट विद्युत् निन्धौ वाचो मण्डल गौरराह ॥ ६८ ॥ यानचक्रे नाङ्गन बोधनाग व्युत्थानतो हस्तिचारी मदस्य । सेनाम्वानाद्दन्तिनामात्मनैव स्थूलासावप्राग्रहस्ताभुल्या ॥ ६९ ॥ प्रत्यागते दतिनि प्राति पक्षे यत्र नाग प्रासत्राक्षच्छिदोऽपि । क्रोधाक्रान्त शूरनिर्दारिताक्ष प्रेक्षाचक्रे नैव किंचिन्मदान्ध ॥ ७० ॥ अन्योन्येषा पुङ्खपुङ्खैरमुख तौ मनोहिदानुचरैर्मुमवान । उन्मूलान सन्निपत्यापरान्तै प्राप्त्युत्त स्पन्दनाश्नीमा ॥ ७१ ॥ द्राघीयास सहसा स्वेमभाजश्वास्तदप्रासीक्ष्णतामत्यजन्त । दन्ता दन्तैराहता मौमजाना भङ्ग जग्मुर्न स्यय साम जाता ॥ ७२ ॥ मातङ्गाना दन्तसघट्टजन्मा हेमच्छेदच्छायचञ्चच्छिखाग्नि । लम्नोऽप्यग्निश्चामरेषु प्रशम माक्षिप्रेषु व्यज्यत न स्म सैन्यै ॥ ७३ ॥ ओगैर्मग्ने प्रसह्योत्पातता तासिव्यद्दतदमारुह्य पर्णोत्थे । यौगोऽन्तैर्वा वह्निभिर्वारणानामुर्धैर्मूर्धव्योम्नि नक्षत्रमाग ॥ ७४ ॥ सद्यः क्षोमोदश्यामले सामजाना वृन्दे नीता शोणिते शोणिमानम् । दन्ता शोमामापुरम्भोनिधीना कन्दोद्वेला विद्रुमा वारिणीव ॥ ७५ ॥ उत्क्षिप्योर्ध्वं प्रस्फुरन्त रदाभ्यामीर्ष्यान्त प्रुपरै शात्रवीयम् । हृष्टमोर्नैर्गैरेण्यास्तुदस्य स्पष्ट प्राप सास्यमुर्धीधरस्य ॥ ७६ ॥ व्यास लोकैर्दुःसलभ्यापसार सम्भिन्नादेव धीरो महीय । सेनामध्य गाहते वारण स्म प्रक्षेप्रागा दिदेवोदगन्त ॥ ७७ ॥ भूतश्रेणिश्यामभामा गमहैर्गौरा चाना विद्धनीरन्ध्रदेह । निर्भीतत्वादाहवेनाहतेच्छो इव्य

---

१ अथम् २ नियन्तार यथा कश्चित् कश्चित् तलोहमूल्णा पर्दकरेण गुरु मुखेन भाति, तथा सेना प्रतिमे यत्र पत्ति पत्तिमाऽश्वमश्वेनेत्यादिक्रमेण भेज इत्यर्थ ३ दाम्याणि ४ अनुरूप यत् ५ पक्षवत्पाया ६ यथा कश्चित् भित्तिर पगूर्पारोहणक्रमेण गिरिदुरारोहमदितदाविमारोहति तद्वदिति भाव ७ आरणम् ८ प्रज्वलक्ष्म
१७ मु र मौ

१ वह्निन २ पराङ्मुखा ३ सरकरेण ४ चक्रम ५ कवचे ६ नामाम् ७ लोहमयेन ८ नवाहद ९ बाणविशेषेण १० सर्वव्यापिनी ११ पृथिव्या १२ गुल्फाग्रे १३ नागानाम् १४ दन्तैरुर्ध्वं १५ मुक्ताफलैरिव १६ महारत्न १७ सम्भ्र

मन्ये देव तया क्रमेण जनितो युष्मत्प्रतापानलो येनारातिवधूविलोचनजलैः सिक्तोऽपि [1]संवर्धते ॥ १५ ॥ देव त्वद्भुजदण्डदर्पगरिमोद्गीर्णप्रतापानलज्वालापङ्क्तिमषीतिपारदघटी विस्फारिता त्रिदिव । शेषाहिः क्व नु तारका क्व नु कति क्षीरोदधिः क्वापि प्रालेयाचलशङ्खशुक्तिरजताः कर्पूरकुन्देन्दवः ॥ १६ ॥ भङ्गाकीर्तिमषीमलीमसतया प्रत्यर्थिसेनाभटश्रेणीति दुःखाननेषु विलसत्यस्य प्रतापानलः । अस्मादुत्तरिताः स्फुरन्ति जगदुत्सङ्गे स्फुलिङ्गाः स्फुटं भालोद्भूतभवाक्षिभानुहुतभुग्जम्भारिदम्भोलयः ॥ १७ ॥ तावद्दीर्घविरिञ्चिवासरनिधौ जानामि यत्कल्पिता शङ्के यत्प्रतिबिम्बमम्बुधिपयःपूरोदरे वाडवः । व्योमव्यापिविपक्षराजकयशःशशराशिपराभावुकः कासामस्य न स प्रतापतपनः पारं गिरां गाहते ॥ १८ ॥ शम्भुर्मानससंनिधौ सुरधुनीं मूर्ध्ना दधानः स्थितः श्रीकान्तश्चरणस्थितामपि वहन्नेतां निलीनोऽम्बुधौ । मग्नः पङ्करुहे कमण्डलुगतामेनां दधन्नाभिभूर्मन्ये वीर तव प्रतापदहनज्वालोत्करं भाविनम् ॥ १९ ॥ युष्मत्प्रोद्धतप्रतापतपनज्वालावलीव्याकुले ब्रह्माण्डे मधुसूदनोऽहिशयने शेते पयःसागरे । शम्भुर्जह्नुसुतां दधाति शिरसा भूमिस्तुषाराचलं तापव्याकुलितः पतत्यतितरां भानुः समुद्रे मुहुः ॥ २० ॥ नार्यः कुङ्कुमशङ्कया निटिलगं प्रोत्सर्पत्प्रास्तद्विषां साध्व रागममुं विभाव्य गगने गच्छन्ति केलीगृहम् । मुग्धा दावधियोऽथ्यरण्यं निमो याति द्रुतं कानने लाक्षाराग इति प्रकुप्यति घने कान्ता प्रतापोदये ॥ २१ ॥ यो नास्ताचलमस्तकं प्रति गतो दीनत्वमालम्बते यो नायाति निशासु सत्पदं नोदेति गिर्याश्रयात् । यो राहोरपि कर्कशेषु दशनेष्वासीनं वा गोचरः सोऽद्य भूप तव प्रतापतपनो वर्वर्ति सर्वोपरि ॥ २२ ॥ कान्तारे जलवृष्टवैरिणि मुहुस्त्वद्वैरिवामभ्रुवो वालैराकुललोचनैः प्रतिपदं रुद्धक्रमाध्वक्रमे । पृथ्वीचण्डरुचे पटच्चरदशासघट्टदीप्तप्रभं सिक्तं त्यक्तजलैश्चिताश्रुभिरलं युष्मत्प्रतापानलम् ॥ २३ ॥ अध्यायोधनवेदि मार्गणकृशानासीर्य खड्गस्रुचा हुत्वारेः पललं चरुं हविरसृक्कमस्तकमस्थिकं । सनेत्राह्वनीयमानसदमि-

रयोऽसौ प्रतापानलोऽस्यापि द्रागुदकाञ्जलीकृतवतु पाथोधिना श्रीमता ॥ २४ ॥ देव त्वद्भुजदण्डचण्डिमचमत्कारिप्रतापानलज्वालाजालभयादिवाभिनिशति क्षीराम्बुधिं माधव । भर्गः स्वर्गधुनां दधाति शिरसा त्यक्तत्रिलोकीकृतिर्वेधा किं तु मुहुः कमण्डलुजलस्नानमासिमति ॥ २५ ॥ श्रीमद्भीराधिवीर पृथुतरमहस्सत्त्वप्रतापाभिशीलैश्चञ्चल्वाव्वे शोषवार्ता शरणमनुगतं कुनचित्कश्चिदेन । चन्द्रः कीलासुधास्ये त्रिदशतरुवरः पाणिपद्मे च कोशे लक्ष्मीः [2]क्ष्वेडं च कोपे जलधरकुसुमं वैरिकान्तादृगन्ते ॥ २६ ॥ द्रागान्म्योदयाद्रिं चैरमगिरिमतिस्पर्धया निरमरश्मेर्मेरुं पर्यस्य लङ्कानगरमुपगतः कौतुकात्त्वत्प्रतापः । वीक्ष्यामुं वीतिहोत्रं पुनरपि विपदं देव निश्चिन्वतीनां यः क्षोभो राक्षसीनां क्षणमजनि स हि त्वद्विषां सर्वदास्ताम् ॥ २७ ॥ त्वत्खङ्गाघातजातव्यथरिपुवनितामुक्तनाप्याम्बुधारासारादारादुदाराद्दिशि दिशि सरितामुत्कवाश्चेद्ववेषु । त्वत्पातङ्गकेलिप्रकरविजयिनो विस्फुरत्त्वत्प्रतापात्पारावारानपारानपि सपदि पराशुष्यत पूरयेत ॥२८॥ दुर्वाराराति जीवनदवदहनः कोङ्कुमो दिग्वधूनां सर्वाङ्गीणोऽङ्गरागस्त्रिभुवनभवनध्वान्तविध्वंसदीपः । त्वद्दोर्द्दामदर्वीकरमुखहुतभुग्भूतधात्रीपुरध्यावासो माजिष्ठमुर्वीरमणकुलमणे जागरीति प्रतापः ॥ २९ ॥ भूजाने किं न जाने भवदतुलभुजभ्राजमानप्रतापज्योतिर्ज्वालावलीभिर्जलनिधिवलयं निर्जरं किं न भूयात् । युष्मत्प्रत्यर्थिपृथ्वीपरिवृढवनितानीरनेत्रस्रवन्तीसूनस्रोतःसहस्रैरयमिह परितश्चेन्न पूर्यते सद्यः ॥ ३० ॥

## कीर्तिवर्णनम्

राजंस्त्वत्कीर्तिचन्द्रेण तिथयः पूर्णिमा कृताः । मद्देहाच बहिर्याति तिथिरेकादशी भयात् ॥ १ ॥ अस्थिरद्धिधवचैव कुष्ठवत्त्विष्टवत्तथा । राजंस्तव यशो भाति शरच्चन्द्रमरीचिवत् ॥ २ ॥ सरस्वती स्थिता वक्त्रे लक्ष्मीर्वेश्मनि ते स्थिता । कीर्तिं किं नु पिता राजन् येन देशान्तरं गता ॥३॥ यद्गुणैर्ग्रथितैः शुद्धैरमितैर्नद्धगोलकः । बिधत्ते कीर्तिकन्याया क्रीडाकन्दुकचौरम् ॥ ४ ॥ मिक्तः स्फटिककुम्भान्तः स्थितः श्वेतीकृतैर्जलैः । मौक्तिकं चेलतां सूते तद्गुणैस्ते समं यशः ॥ ५ ॥ अहो विशाल भूपाल भुवनत्रितयोदरम् । माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ ६ ॥ त्वत्कीर्तिराजहंसा वैरिवधूवदनभाजनस्यमपि ।

[1] अत्राय भावः—वैरिस्त्रियः स्वभर्तृमरणाद्यथा यथाऽधिकं रुदन्ति तथा तथाऽधिकं नेत्राम्बुभिस्त्वत्प्रतापाग्निः संवर्धते त्वत्प्रतापो ऽधिको भवतीति यावत्, यत्र स प्रतापाग्निर्वडवानलस्तिनुलस्तिदुच्यते । मानुः समुद्रमग्नो च विनैरी पानीयबोगादेवो(?) ... त्वत्प्रतापो भवद्वैरिरमणीनेत्राम्बुभिः सिच्यमानो वृद्धिमामोलेतदुचितमेवेति [2] पराय [3] वालरत्नवनेषु [4] विन्दुवरायेभ्यो ... [5] हतविलिनेत्रम् [6] कुटिलम् [7] 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते' इति

[1] अग्नि [2] गरलम् [3] अस्ताचल [4] धारासंपात [5] अपरिमित

पीत हासक्षीर व्यक्तीकृतमप्युनीर च ॥ ७ ॥ कुचकलशेष्य-चलानामस्त्रायामथ पयोनिधे पुलिने । क्षितिपाल कीर्तयस्ते हारन्ति हरन्ति हीरन्ति ॥ ८ ॥ रजनीषु विमलभानो करजालेन प्रकाशित वीर । धवलयति भुवनमण्डल मखिल तव कीर्तिसततिः सततम् ॥ ९ ॥ दूरेऽपि श्रुत्वा भवदीयकीर्ति कर्णा हि तृप्तौ न च चक्षुषी मे । तयोर्विवाद परिहर्तुकाम समागतोऽह तव दर्शनाय ॥ १० ॥ आवर्ण्य भूपाल यशस्त्वदीय विधूनयन्तीह न के शिरासि । विश्वम्भराभङ्गभयेन धात्रा नाकारि वर्णौ भुजगेश्वरस्य ॥११॥ यशाञ्जनश्यामश्शङ्खपङ्कजातानि जाने धवलानमापु । अरातिनारीशरकाण्डपाण्डुगण्डस्थलीनिर्लुठिताधशासि ॥१२॥ य कोटिहोमानलधूमजालैर्मलीमसीकृत्य दिशा मुखानि । त्वत्कीर्तिभि क्षालयति स्म शश्वदखण्डतारापतिपाण्डुराभि ॥ १३ ॥ इय यशासि द्विषत सुधारुच स्मिङ्कमेताद्विषत विमाननम् । यशोभिरस्याखिललोकधाविभिर्विमोचिता धावति तामसी मसी ॥ १४ ॥ अद समितसमुल्वबीरयोर्नेतमुद्दस्तुजार्कम्बुमृणालहारिणी । द्विषद्रणक्षेणहरम्बुनिर्झरे यशोमरालावलिरस्य खेलति ॥ १५ ॥ अनि सर्तीमपि देहगर्भा त्वत्कीर्ति परेषामसतीं वदन्ति । स्वैर चर तीमपि च त्रिलोक्या त्वत्कीर्तिमाहु कथय सती नु ॥ १६ ॥ करवालकरालवारिधारा यमुना न्वियतरगिणी च कीर्ति । तव कामद तीर्थराज दूरादनुबभ्नाति सरस्वती कवीनाम् ॥ १७ ॥ त्रिजगदुन्नलङ्घनजाङ्घिकैस्तव यशोभिरतीव पवित्रिता । प्रथम पार्थिवपुङ्गवकीर्तयो विबुधसिन्धुजलैरिव सिन्धव ॥ १८ ॥ त्वत्कीर्तिमौक्तिकफलानि गुणैस्त्वदीयै सर्दभितु विबुधैवाम दृश प्रवृत्ता । नान्तो गुणेषु न च कीर्तिषु रन्ध्रलेशो हारो न जात इति ताश्च मिथो हसन्ति ॥ १९ ॥ पृथ्वीपते शुभमते भवतो भवस्य त्रमो वय सुयशसा नियद तरया । गौरी चकार गिरिशो निजमर्धमङ्ग गौरीकृत च भवता भुवन समस्तम् ॥ २० ॥ कीर्तिस्तव क्षितिप याति भुजङ्गगेह मातङ्गसगमकरी च दिगन्तकेषु । त्वत्स्वौम्बर भजति नैन्दनमप्यगम्य किं किं करोति न निर्गलिता सती ॥ २१ ॥ निर्मुक्तशेषधवलैरचलेन्द्रम थसक्षुब्धदुग्धमयसागरगर्भगौरे । राजद्वि बहुलपक्षदल मृगाङ्कच्छेदोज्ज्वलैस्तव यशोभिरशोभि विश्वम् ॥ २२ ॥ प्रतिनगरमटन्ती प्रत्यगार व्रजन्ती प्रतिनृपतिवक्ष कण्ठपीठे लुठन्ती । गिरिगगमिलितम्बाच्छादने सावधाना तदपि च तव कीर्तिर्निर्मलेति चित्रम् ॥ २३ ॥ त्यजसि यदपि लक्ष्मीं कीर्तिमामाद्य दानैर्नति तदपि कीर्ति सिन्धुपार न लक्ष्मी । कथय क इह हेतुर्नरेश त्वदीये वसति हृदयपद्मे न त्वमूर्मुरारि ॥ २४ ॥ अनुरणमनुक्षण क्षितिप रक्ष्यमाणा त्वया प्रयाति विदिशो दश धवलकीर्तिरेकाकिनी । इय नियतम र्थिषु प्रतिदिन वितीर्णा रमा जहाति न तवान्तिक द्वितयमेतदत्यद्भुतम् ॥ २५ ॥ मसृणतघनस्तनस्तबकचुम्बितुम्बीफलक्कणन्मधुरवीणया विबुधलोकवामभ्रुवा । त्वदीयमुपगीयते हरकिरीटकोटिस्फुरत्तुषारकरकन्दलीकिरणपूरगौर यश ॥ २६ ॥ वनेषु वनदेवता दिवि दिवौकसा वल्लभा भुजगकुलकन्यका भुजगलोकलीलावने । यश समरसचित नरमृगेन्द्र गायन्ति ते प्रभाविजितकौमुदीकुमुदपाण्डुताडम्बरम् ॥ २७ ॥ अपायि मुनिना पुरा पुनरमोचि मर्यादयाप्यतारि कपिना पुरा पुनरदाहि लङ्कारिणा । अमथि मुरवैरिणा पुनरबन्धि लङ्कारिणा क नाम वसुधापते तव यशोम्बुधि क्षाम्बुधि ॥ २८ ॥ महाराज श्रीमज्जगति यशसा ते धवलिते पयःपारावार परमपुरुषोऽय मृगयते । कपर्दी कैलास सुरपतिरपि स्व करिवर कलानाथ राहु कमलभवनो हसमधुना ॥ २९ ॥ कुविन्दस्त्व तावत्पटयसि गुणग्राममभितो यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो । शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥ ३० ॥ पतत्येतत्तेजोहुतभुजि कदाचिद्यदि तदा पतङ्ग स्याद्धौकृतनमपतङ्गाभ्युदय । यशोऽमुष्येवोपार्जयितुमसमर्थेन विधिना कथञ्चित्क्षीराम्भोनिधिरपि कृतस्तत्प्रतिनिधि ॥ ३१ ॥ इन्दोर्लक्ष्म त्रिपुरजयिन कण्ठमूल मुरारिर्दिङ्नागाना मदजलमषीभाञ्जि गण्डस्थलानि । अद्याप्युर्वीवलयतिलकश्यामलिम्नानुलिप्तान्याभान्ति वद धवलि किं यशोभिस्त्व-

१ कथयन्ति २ पृथ्वी ३ शेषस्य ४ भुजगनिवामूह ५ शङ्खत्वानि ६ गुणितुम् ७ देवाङ्गना ८ नागलोकम् पक्षे,-गणिकापतिगेहम् ९ ऐरावतादीनामष्टदिग्गजानां समागमकरी, पक्षे,-चण्डालसंगमकारिणी १० दिक्पर्यन्तेषु पक्षे,-विजनप्रदेशेषु ११ व्योम पक्षे,-वस्त्रम् १२ सुरालयवासम् पक्षे,-पुत्रम् १३ गन्तुम दानवाय, पक्षे,-गन्तारम् १४ निश्चितबलम्

१ पीत २ अगस्तिना ३ मित ४ तीर्ण ५ हनुमता ६ मथित ७ बद्ध ८ क्षीरसमुद्रम् ९ विष्णु १० शिव ११ इन्द्र १२ ऐरावतम् १३ चन्द्रम् १४ विधि १५ यत्र सर्वेषां समुद्राणां पवनानां गगनानां सवमक्षयाणां पतिना च स्वच्छत्वेनवोल्या श्वेतत्वाच्छीराब्ध्यादीनामनवगमस्तेषामन्वेषणं तामवनावलोकयन्तीति भाव १६ तन्तुवाय, पक्षे,-कु पृथिवीं विन्दति लभते स १७ पट वस्त्र करोति, पक्षे,-पटुं करोति १८ तन्तु, पक्षे,-सद्गुण १९ नग्ना, पक्षे,-स्तुतिपाठका २० कलङ्क २१ दिग्गजानाम् २२ गुल्मानि २३ नीलिम्ना

वीये ॥ ३२ ॥ किं वृत्तान्तं परगृहगतैः किंतु नाहं समर्थस्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः । गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्यामुन्मत्तेव भ्रमति भवतो वल्लभा देव कीर्तिः ॥ ३३ ॥ कैलासस्य प्रथमशिखरे वेणुसंमूर्छनाभिः श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् । स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥ ३४ ॥ अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेषस्याहर्भूयः फणसमुचितं काययष्टेर्निकायः । दुग्धाम्भोधेर्मुनिचुलुकनत्रासनागाम्भुपायः कायव्यूहः क्व जगति न जागर्त्यदः कीर्तिपूरः ॥ ३५ ॥ कथमवनिप दर्पो यन्निशातासिधारादलनगलितमूर्धा विद्विषां स्वीकृता श्रीः । ननु तव निहतारेरप्यसौ किं न नीता त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥ ३६ ॥ समितिपतितनिपाताकूणनद्वारगदीर्णप्रतिनृपतिमृगाक्षीलक्षवक्त्रशिरासु । लिखितमिव विरिञ्चेरस्ताडनं यस्य हस्तप्रखरनखरटङ्कैरस्य कीर्तिप्रशस्तिः ॥ ३७ ॥ सुमितवसनालंकारायां कदाचन कौमुदीमहसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः । तदनु भवतः कीर्तिः केनाप्यगीयत येन सा प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ॥ ३८ ॥ देव त्वद्यशसि प्रसर्पति जगल्लक्ष्मीसुधौघे श्रवश्चन्द्रेरावणयौ स्तुमः स्थितिमिरामयन्त दुग्धाम्बुधौ । किं त्वेकः पुनरस्ति दूषणकणो यत्रोपयाति भ्रमात्कृष्णः श्रीः शितिकण्ठमद्रितनया नीलाम्बरं रेवती ॥ ३९ ॥ इन्दुं निन्दति चन्दनं न महते मल्लीस्रजं नेक्षते हारं द्वेष्टि सिताब्जमुज्झति बिसलोमं निगृह्णाति च । श्रीभूपाल महीधरेषु विपिनेष्वम्भोधितीरेषु च त्वत्कीर्तिस्तनदरिप्रिया च विलसत्युच्चैः स्फुरत्पाण्डिमा ॥ ४० ॥ इन्दुं निन्दति चन्दनं न सहते निर्द्वेष्टि पङ्केरुहं हारं भारमवैति नैव कुरुते कर्पूरपूरे मनः । सर्गङ्गामवगाहते हिमगिरिं गाढं समालिङ्गते त्वत्कीर्तिर्विरहातुरेव न मनागेकत्र विश्राम्यति ॥ ४१ ॥ यस्य क्षोणिपतेर्विहायसि यशोराशौ चमत्कुर्वति द्राक्कर्पूररजोभ्रमेण वणिजो वीथीमुपस्कुर्वते । चञ्चु चञ्चुरयन्ति चन्द्रकिरणभ्रान्त्या चकोराः पयोबुद्ध्या व्योम्नि नियोजयन्ति कलशीं गानीय वामभ्रुवः ॥ ४२ ॥ कर्पूरादपि केतकादपि दलत्कुन्दादपि स्वर्णदीकल्लोलादपि कैरवादपि चलत्कान्तादुग्धादपि । दूरोन्मुक्तकलङ्कशङ्करशिरःशीतांशुखण्डादपि श्वेताभिस्तव कीर्तिभिर्धवलिता सप्तार्णवा मेदिनी ॥ ४३ ॥ देव त्वद्यशसा सदा सुमहसा गीर्वाणवृन्देऽखिले शम्भोर्मौ-वमनापिते तु सहसा यत्कौतुकं तच्छृणु । साकूता सकुतूहला सचकिता सोत्कण्ठिता साद्भुता साशङ्का च मुहुर्मुहुर्मधुरिपौ लक्ष्म्या दृशः पातिताः ॥ ४४ ॥ किं शीतांशुमरीचयः किमु सुरस्रोतस्विनीवीचयः किं वा केतकसूचयः किमथवा चन्द्रोपलानां चयः । इत्थं जातकुतूहलाभिरभितः सानन्दमालोकिता कान्ताभिस्त्रिदिवौकसां दिशि दिशि क्रीडन्ति त्वत्कीर्तयः ॥ ४५ ॥ श्रीमद्राजशिखामणे तुलयितुं धाता त्वदीयं यशः कैलासं च निरीक्ष्य तत्र लघुतां निक्षिप्तवान्पूर्तये । उक्षाणं तदुपर्युमासहचरं तन्मूर्ध्नि गङ्गाजलं तस्याग्रे फणिपुंगवं तदुपरि स्फारं सुधादीधितिम् ॥ ४६ ॥ भारत्या वदनं श्रिया च सदनं श्रीकण्ठभक्त्या मनो धर्मेण श्रवणौ परेश चरणौ शौर्येण बाहुद्वयम् । दानेनापि करौ स मीक्ष्य सकलं यस्याज्ञया भूतलं स्थातुं चानवकाशतां कथयितुं कीर्तिस्तु दूरं गता ॥ ४७ ॥ अस्योवारमणस्य पार्वणविधुद्वैराशसङ्ग्यं यशः सर्वाङ्गोज्ज्वलशर्वपर्वतसितश्रीगर्वनिर्वासि यत् । तत्कम्बुप्रतिबिम्बितं किमु शरत्पर्जन्यराजिश्रियः पर्यायः किमु दुग्धसिन्धुपयसां सर्वानुवादः किमु ॥ ४८ ॥ कर्पूरन्ति सुधाद्रवन्ति कमलाहासन्ति हसन्ति च प्रालेयन्ति हिमालयन्ति करकासारन्ति हारन्ति च । त्रैलोक्याङ्गनरङ्गलङ्घिमगतिप्रागल्भ्यसंभाविता शीतांशोः किरणच्छटा इव जयन्त्येतर्हि त्वत्कीर्तयः ॥ ४९ ॥ किं चित्रं भुवनानि पावयति यद्वाहितानां यशो हंसा मज्जयति प्रतापदहनं निर्वापयत्याशु यत् । आश्चर्यं नृपनायकस्य भवतो यत्कीर्तिमन्दाकिनी तानारोहति भूधराञ्जलनिधीनुल्लङ्घ्य गच्छत्यपि ॥ ५० ॥ अर्धाङ्गाहितगौरवकीर्तिवनितादीव्यत्सिताशुप्रभं कैलासीकृतदिक्करीन्द्रशिरसि न्यस्तस्वपादाम्बुजम् । विश्वव्याप्यविनाशि शंकरपदं यायात्त्वदीयं यशो न स्यादस्य यदि क्षितीश भवतो दानादिकेभ्यो जनिः ॥ ५१ ॥ कृत्वा मेरुमुलूखलं प्रहसता वृन्देन दिग्योषितां स्वर्गङ्गामुसलेन शाल्य इव त्वत्कीर्तयः कण्डिताः । तासां राशिरसौ तुषारशिखरी तारागणास्तत्कणाः किं चान्यच्छशिखण्डशूर्पविसरज्ज्योत्स्नाश्च तत्पांसवः ॥ ५२ ॥ कैलासीयति वैरणीयति रमं कर्पूरपुञ्जीयति क्षीरोदीयति मौक्तिकीयति नभोगङ्गातरङ्गीयति । हंसौघीयति मानसीयति शरन्मेघीयति क्षोणिभृन्नाथीयत्यमृतीयति क्षितितले देव त्वदीयं यशः ॥ ५३ ॥ गङ्गीयत्यमितापगा फणिगणः शेषीयति श्रीपतिः श्रीकण्ठीयति

१ देवपुत्र. २ मयूर यावत्. । कापि भवितव्यमिति भाव. ३ कार्यापात्र. ४ अभिन्न., अधुना यामयोग्या इति यावत्. ५ हन्तव्य.

१ गन्धम्. २ वेल्लामम. ३ वनमार्गा. । शुभम्. ४ स्यान्तरम्. ५ मत्स्यानि पुनरुक्ति.

कैरवीयति कुल नीलोत्पलाना वने । कर्पूरीयति कज्जल पिककुल लीलामरालीयति खे कुम्भीयति कुम्भिनामपि घटा त्वत्कीर्तिसघट्टत ॥ ५४ ॥ पूर्णेन्दु करकन्दुको हिमगिरि क्रीडाविहारस्थली क्षीराब्धिर्गृहदीर्घिका प्रियसखी वाचा पतिदेवता । शय्या दिग्गजराजदन्तवलभी त्वत्कीर्तिकन्याकृते पाञ्चालीमिथुन व्यधायि विधिना गौरीगिरीशावपि ॥ ५५ ॥ वैरुद्धनकलत्रनेत्रसलिलैर्जम्बालजालस्पृशि भ्रान्त्वा भूपति भालभूषण भवत्कीर्तिर्भुवो मण्डले । यान्ती त्रिदिवालय प्रति सुराकुण्डे सुराशोर्व्यधादङ्घ्रिक्षालनमित्यय त्रिलमलस्तस्मिन्गत स्वैरताम् ॥ ५६ ॥ एतत्कीर्तिनिर्धौतनिखिलत्रैलोक्यनिर्वासितैर्विश्रान्ति कलिता कथासु जरता दैत्यैरभैः समग्रैरपि । जज्ञे कीर्तिमयादहो भयभरैरस्माद कीर्ति पुन सा यत्रास्य कथापथेऽपि मलिनच्छाया बबन्ध स्थितिम् ॥ ५७ ॥ त्वत्तेजप्रतिभामयादपसृता प्रत्यर्थिभूभृत्स्त्रिय कान्तारे घनकण्टकिद्रुमवनव्यस्तप्रयुक्ताम्बरा । आर्याणा पुरतस्त्रपापरवशा गच्छेयुरेता कथ क्षौमाकातरया न चेत्परिणमेत्तत्तावकीन यश ॥ ५८ ॥ चन्द्रश्चन्दनमिन्दुरिन्दुरमण पीयूषमीशादयो विश्वस्योपकृतावनेन महता ते तेऽवतारा धृता । एतचत्र न विद्यते त्रिभुवने न स्थानमेवविध जाने जन्ममपारिजात सगुण यत्रैव पूर्वं यश ॥ ५९ ॥ चन्द्राद्रूप्यकमण्डलो ससुदयक्षीरांशुगङ्गाजलैर्ज्योत्स्नाचन्दनचर्चनैर्विकसितैस्ताराप्रसूनैरपि । एतद्विष्णुपद किमश्नुति भवत्कीर्तिर्महायोगिनी पूजामूर्तिविधायि लक्ष्म तुलसीदाम्ना कदाऽन्विष्यति ॥ ६० ॥ गङ्गासागरसगमे कृतशतस्नाना बदर्याश्रमे स्थित्वासौ परिधाय तद्गुणमय श्वेत दुकूल पुन । ब्राह्म वैष्णवमैन्द्रमैश्वरमपि स्थान स्पृशन्ती मुहु कीर्तिस्ते पतिदेवता युगशत दीर्घायुराकाङ्क्षति ॥ ६१ ॥ अर्घायाम्बुधिरिन्दुमण्डलमपि श्रीचन्दन तण्डुलास्तारा बिल्वदल नभ सुरधुनी धूप प्रदीपो रवि । खेटा पञ्चफलानि किंच ककुभस्ताम्बूलमार्तिक मेरु श्रीजगतीपते तव यशोयोगेश्वरस्यार्चने ॥६२॥ देव क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुपस्त्वत्कीर्तेस्तुलना कलङ्कमलिनो धत्ते कथ चन्द्रमा । स्यादेव त्वदरातिसौधवलभीप्रोद्भूतदूर्वाङ्कुरग्रासव्यग्रमति पतेद्यदि पुनस्तस्याङ्कशायी मृग ॥ ६३ ॥ भोगीन्द्र प्रमदोत्तरङ्गसुरगीसगीतगोष्ठीषु ते कीर्ति देव शृणोतु निशितिशती यच्चक्षुषा वर्तते । रक्ताभि सुरसुन्दरीभिरमितो गीत च कर्णद्वयीदु स्थ श्रोष्यति नाम किं स हि सहस्राक्षो न चक्षु श्रवा ॥ ६४ ॥ गीयन्ते यदि पन्नगीभिरनिश त्वत्कीर्तयस्तद्वय तुष्टा एव परतु चेतसि चमत्कारोऽयमारोहति । तासा तादृशभारभङ्गचतुरनासस्थानसदर्शिनि व्याले द्वेऽप्यवधूतमूर्धनि महीचक्र पुनर्भ्राम्यति ॥ ६५ ॥ यद्गन्धद्विपदानवारिभिरभूत्सङ्ग्रामभू पङ्किला तस्या वैरिकरीन्द्रमौक्तिकमय बीज च येनाहितम् । तस्मात्प्रादुरभूद्यशस्तरुरय तस्योद्गता कोरकास्तारास्तेषु च पूर्णचन्द्रकपटादेकक उज्जृम्भते ॥ ६६ ॥ यत्कीर्तिवरूथ भुव सुविमल सपाद्य सचारत कान्त्या मेरुगिरि विधाय सरितानाथस्य सरय द्रढम् । आराध्यामृतभानुशेखरमल सपाद्य तद्रूपता गच्छन्ती त्रिदशालय द्रुतगति शीतांशुना स्पर्धते ॥ ६७ ॥ शैलूषी तव कीर्तिरद्भुतकरी दृष्ट्वा समस्ता दिशो मेरु वशवर परीत्य परितस्तूर्णं समारुह्य तम् । भ्राम्यन्ती परित प्रनर्तिततनुर्मुक्तावलीमौक्तिकस्ताराभिस्तरलीकरोति गगन भूमण्डलाखण्डल ॥६८॥ त्वत्कीर्ति शशिन समीपमगमत्कान्तिप्रतिस्पर्धया दृष्ट्वा त च कलङ्किन पुनरसौ स्नातु जगामाम्बुधिम् । श्रुत्वा त च घटोद्भवेन मुनिना पीतोज्झित तत्पय पुण्य ब्रह्मकमण्डलु कलयितु ब्रह्माण्डमन्य ययौ ॥ ६९ ॥ कैलासीयति केतकीयति हसत्कुन्दीयति प्रोच्छलत्क्षीरोदीयति चन्दनीयति लसत्कर्पूरपूरीयति । पीयूषीयति शर्करीयति शरच्चन्द्रीयति क्ष्मापते स्वर्गङ्गीयति शक्रीयति भवत्कीर्ते करीन्द्रीयति ॥ ७० ॥ विश्वासो भवता यशस्यपि निजे कार्यो न शौर्याधिके मा कोशादिवशाच्चपुसकमिति ज्ञात्वावहेला कृथा । यज्जङ्घालधुरधरेण धरणीनाथ द्विधा कुर्वता ब्रह्माण्ड विदधेऽमुना भवदरिश्रोणीभुजा निर्गम ॥ ७१ ॥ रिङ्गत्तुङ्गतरङ्गसुन्दरसुधासिन्धु तरत्कुञ्जरा रागाच्छैरपुरसराभिसम देवानुदालिङ्गति । कृगहीश्वरमालिपत्यधि गृह याति भुव भूपते मान्धीशब्दरता तथापि कुतुक कीर्ति प्रमत्ता क्षितौ ॥ ७२ ॥ कस्तूरी मिनिमानमागतवती शौक्ल्य गता कुङ्कुम नीत चोलमभूमितपराङ्गिमा जातो मणीना गणे । ध्वात शातमभूत्सम नरपते त्वत्कीर्तिचन्द्रोदये त्रैलोक्येऽप्यभिसारमाहसरग नात कुरङ्गीदृशाम् ॥ ७३ ॥ स्नातु वाञ्छसि किं मुधैव धवलक्षीरोदपूरोदरच्छायाहारिणि वारिणि द्युसरितो दिक्पूरवि

१ जले 'जीवन भुवन वन' इति कोश २ ऐरावणमिवाचरति ३ हस्तिनाम् ४ सरस्वती ५ त्वत्कीर्तिरेव कन्या तदर्थम् ६ पुत्रिकायुगलम् ७ वैरिवाज ८ कर्दम ९ अत्राय भाव — यत्र यान्त कालुष्यमवलोक्यते तत्र ... भ्रमणेन कर्दमाङ्कितचरणया त्वत्कीर्त्या ... पादप्रक्षालनतो ... यो देवानाथ याति स ... कुण्डे चरणौ प्रक्षाल्य याति तथैवमपीति १० विलासै ११ निष्कामिनै १२ वृद्धानाम् १३ श्यामवस्तुभि १४ वसम् १५ यशोरूपस्य योगेश्वरस्य शिवस्य

१८ सुर भौ

स्तारिणि । आस्ते ते कलिकालकल्मषमषीप्रक्षालनैकक्षमा कीर्तिः सन्निहितैव सप्तभुवनस्वच्छत्वसंपादिनी ॥ ७४ ॥ क्षीरोदीयति सद्म सकलजगद्धयो वासुकीयन्ति नागाः केलासीयति शैला दिवि च दिविषदः शक्रीयन्ति सर्वे । योष्माकीणे समन्तात्प्रचलति धवले चारुकीर्तिप्रताने मद्यो पाकाचभूषा मिमिति न सहसा मौक्तिकीयन्ति देव ॥७५॥ उपद्मालाङ्कुरश्रीदिशि दिशि दशनैरेभिराशागजानां रोहन्मूलासु गौरैरुरगपतिफणैरत्र पातालकुक्षौ । अभिन्नाकाशदेशे निरुमितकुसुमा राशिभिस्तारकाणां नाथ त्वत्कीर्तिवल्ली फलति फलमिदं बिम्बमिन्दोः सुधाढ्यम् ॥ ७६ ॥ वारि पातालमूलं जलमुरगनदी कच्छपः स्वच्छकन्दः शेषो नालं दलानां निततिरपि फणाः कर्णिका शैवशैलः । ताराः स्तारा परागा मधु च मधुमती केसरा दन्तिदन्तास्तस्मिंस्त्वत्कीर्तिपद्मे भ्रमति मधुकरः शर्वरीसार्वभौमः ॥ ७७ ॥ नपालीनामराले विरचयति कचे केतकीपत्रकृत्यं कण्ठे मुक्ताकलापाद्द्विगुणयति सितान्पाण्डुरसीमन्तिनीनाम् । कर्णे कर्णाटकीनां प्रकटयतितमां दन्तताटङ्कलक्ष्मीं कार्पूरीं पत्रवल्लीं भवति तव यशो गण्डयोः केरलीनाम् ॥ ७८ ॥ एष रागाकृताङ्गा सुदृढमिह ययैवासि यष्ट्यारिकण्ठे मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती । तत्सक्तोऽस्य न किंचिद्गणयति विदितं तेऽस्तु तेनाखिलं दत्ता भूतेभ्यः श्रीनियोगाद्वदितुमिति गतेवाम्बुधिं यस्य कीर्तिः ॥ ७९ ॥ शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्रीनक्रे पार्श्वे तथैषा प्रतिवसति महादुर्गिनी खड्गयष्टिः । आज्ञेयं भवता ते विलसति च पुनः किं मया वृद्धया ते प्रोच्येवेत्थं प्रकोपाच्छशिकरमितया यस्य कीर्त्या प्रयातम् ॥ ८० ॥ अन्तः संतोषमाप्य स्थगयति न दृशस्ताभिराकर्णयिष्यन्नङ्गेनानस्ति रोमा रचयति पुलकश्रेणिमानन्दकंदाम् । न क्षोणीभङ्गभीरुः कलयति च शिरःकम्पनं तत्र विद्मः श्रण्वन्नेतस्य कीर्तीः कथमुरगपतिः प्रातिमाविष्करोति ॥ ८१ ॥ यावत्पालैरलब्धास्तुमरतुमयहरिर्लोमरे गोत्तरीये सेतुप्रालेयशैलौ चरति नगपनेमात्रदेतस्य कीर्तिः । यावर्धाम्रलगाशापरिवृढनगरम्भणसम्भमुद्राविद्री सध्यापतारकचिरचिनशिराशोणशोभाकुमौ च ॥ ८२ ॥ आसे दामोदरीयामियमुदरगी याधिगम्य त्रिलोकी समातु न्नक्तिमन्ति प्रभिमभरणादत नैतद्यशांसि । तामेता पूर्यित्वा निरगुरिव मधुध्वसिनः पाण्डुपद्मच्छद्मापन्नानि तानि द्विपदशनसनामीनि नाभीपथेन ॥ ८३ ॥ देव ब्रह्माण्डभाण्डे सदसि विकसितप्रायनान्दीनिनादैर्भूतेशप्रीतिहेतोर्भुवनधवलन नाटकं नाट्यन्त्या । त्वत्कीर्तेर्मूर्तयोऽमी कुमुदकुमुदिनीकान्तकर्पूरकुन्दक्षीराब्धिक्षीरमुक्तामणिविबुधसरित्तारकाशेषशङ्काः ॥ ८४ ॥ बीजं चेदिन्द्रदन्तिस्फुरितगलतटीमुक्तमुक्तामणिः स्याच्च द्रवेदालवालं यदि भवति सुधावारिसेकीन्दुमौलिः । तन्नोत्पन्ना लता काप्यमृतकरनिभं चेत्प्रसूनं प्रसूते मन्ये तस्मात्तदानीमगनिधन भवत्कीर्तिलेशोपमार्थम् ॥ ८५ ॥ दुग्धाम्भोधावगाधे विहरति सुधया क्षालयत्यङ्घ्रियुग्मं वृत्ता ज्योत्स्ना दुकूलं कलयति मलयोद्भवचर्चां तनोति । स्वच्छन्दं नृत्यति द्राग्भुजगपतिशिरस्येव निद्राति चन्द्रे त्वत्कीर्तिः स्वामिनीव त्रिजगति विहरत्येवमुर्वीश गुर्वी ॥ ८६ ॥ स्वर्गे कल्पद्रुमाधस्तव जयति यशःपुञ्जयोगेश्वरोऽयं य नित्यं देवराजः स्नपयति नियतं कामधुग्दुग्धपूरैः । यन्मौलौ बिल्वपत्रद्युतिमिदममलं व्योम धत्ते ऽतिनीलं चन्द्रः पाटीपद्म तदुपरि ललितास्तारकास्तण्डुलानि ॥ ८७ ॥ यत्कीर्तिः कापि गङ्गा सलिलमलनिचयं नाशयन्ती गभीरं क्षीराब्धिं यत्प्रतापज्वलनकरगणैः शोषितं पूरयन्ती । भूलोकस्यात्तपालस्फुरदतुलमहादुःखसंघपङ्कं भूयः प्रक्षालयन्ती त्रिजगति महिता सोऽयमाविष्करोति ॥ ८८ ॥ तुङ्गब्रह्माण्डसिंहासनमिदमुदयच्चित्रमध्यासनित्यन्यञ्चद्दिव्यस्रवन्तीसितचमरचयं लालयद्दिग्वधूभिः । राकाचन्द्रातपत्रं दिनकरमुकुटं भ्राहयँल्लोकपालान्निर्जित्यैन्द्रं करीन्द्रं तव जयति यशश्चक्रवर्ती वघेल ॥ ८९ ॥ कालिन्दीर्मदाम्भः स्तुतमदमलिलोलत्प्रकीर्णो पुष्पयन्तो बिभ्राणः कुम्भयुग्मं गगनतलगतं स्वर्धुनीपूरशुण्डः । घण्टालः साधुनादैरनभिमतयशोमृन्मलः सद्यधानः कीर्तिस्तोमाभ्रकुम्भी जगदुदरसरः संभ्रमी बम्भ्रमीति ॥ ९० ॥ स्रग्जन्द्रह्माण्डमुक्ता तव भुजजलदोद्दामदानौघवर्षप्रोद्यत्त्वत्कीर्तिमुक्ताफलममलमहो वामकर्णे निधाय । अन्यं तेनैव तुल्यं धरणिधरसुता प्रार्थयामास पत्यौ तस्यालाभेन मन्ये प्रभुरपि जगतामर्धनारीश्वरोऽभूत् ॥ ९१ ॥

[1] भाच्छदर्या [2] द्रुमि [3] अविवमात्वोमा [4] विमीगाणे मराघो [5] नभितोत्तरदर्शाविषय [6] प्रभु, इन्द्रवत्सारविन्न [7] दरयास्तैन विलो [8] धैर्यवोम् [9] महिमानिरायवशाद

---

## कीर्तिप्रतापौ

रात्रौ रवेर्दिवा चेन्दोरभावादिव स प्रभुः । भूमौ प्रतापयशसी सृष्टवान् सततोदिते ॥ १ ॥ मन्निर्यितु गलरदा

[1] दिगो [2] नाभिपुण्डरीकस्थानानि [3] सर्वाक्तुपमी

मिति पित्रा नियोजित । तदेव शत्रु कृतवान्पितुराज्ञा न लङ्घिता ॥ २९ ॥ कान्ते धावय मे पादाविति भर्त्रा निवेदिता । नैतया धावितौ पादौ भर्तुराज्ञा न लङ्घिता ॥ ३० ॥ देवराजो मया दृष्टो वारिवारणमस्तके । भक्षयित्वार्कपर्णानि विषं पीत्वा क्षयं गतः ॥ ३१ ॥ कुमारसंभवं दृष्ट्वा रघुवंशे मनोऽदधत् । राक्षसानां कुलश्रेष्ठो रामो राजीवलोचनः ॥ ३२ ॥ विनौ यौवनमार्गेण गच्छन्तौ लक्षितौ मया । हरेः कृत्यं दर्शयता पश्येत्युक्ते न दृश्यते ॥ ३३ ॥ विनायकपते शत्रुस्तस्य नाम षडक्षरम् । पूर्वार्धं तव राजेन्द्र उत्तरार्धं तु वैरिणाम् ॥ ३४ ॥ कोलाकृतिरपारेवो मोरोहंसो जलोदरी । कमारिरात्तलीलो वो वाधलो भूकलोऽवतु ॥ ३५ ॥ रामेरा मेऽतिरामेऽतिरमे रामे मनोरमे । सहस्रनामतत्तुल्यं रामनाम वरानने ॥ ३६ ॥ यथा नयति कैलासं नगं गानसरस्वती । तथा नयति कैलासं न गङ्गा न सरस्वती ॥ ३७ ॥ मोमारामममादद्दे हयागदलनभष । यस्यैतानि न विद्यन्ते स याति परमां गतिम् ॥ ३८ ॥ तातेन कथितं पुत्र लेखं लिख ममाज्ञया । नैतेन लिखितो लेखः पितुराज्ञा न लोपिता ॥ ३९ ॥ वासनावासुदेवस्य वासितं भुवनत्रयम् । सर्वभूतनिवासीना वासुदेव नमोऽस्तु ते ॥ ४० ॥ अनिलोचनसंभूतज्योतिरुद्गमभासिभिः । सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम् ॥ ४१ ॥ मुद्गदाली धृतव्याली कवीन्द्र वितुषा कथम् । भक्तवल्लभसंयोगाज्जाता विगतकञ्चुकी ॥ ४२ ॥ अङ्घ्रिष्णुधामाप्य विषमाश्च करोत्ययम् । निद्रां महसपर्णानां पलायनपरायणाम् ॥ ४३ ॥ वति ते कबरीभारं सुमनं सह्यप्रियेऽति नीलत्वात् । भवति च वैलापनत्त्वानिर्जरसेव्यं कथं न स्यात् ॥ ४४ ॥ यामि विधौ नभ्युदिते पुनरेष्यामीति यदुदितं भवता । जानेत्यु दन्तमेतं नेदं तत्त्वेन मुग्धमधु ॥ ४५ ॥ अधुना मधुकरपतिना गिलितोऽप्यंधकारदंपती येन । त्रातः स पालयेत्त्वा

---

१ नतया नम्रीभूतया २ हे दवर' अनदछाग ३ सेतु ४ पानीयम् ५ वास ६ रघुवंशे कुलश्रेष्ठो राजीवलोचनो रामो राक्षमाना कु पृथिवीं मारयन्ति पीडयन्तीति कुमारः पृथ्वीपीडक इति यावत् तादृश संभवमुद्भवं दृष्ट्वा तत्र तेषां नाशे मनोऽदधत् निश्चिकायेत्यर्थः ७ यौ विना पक्षिणा गरुडेन वाहनेन वनमार्गेण जलमार्गेण क्षीराब्धाविति यावत् गच्छन्तौ स्तः, अत्र वाक्ये मया लक्ष्म्या सहितस्य हरेर्विष्णोः कृत्यं लक्षितं प्रोक्तमस्ति, परं दर्शयता दर्शनं कारयता तेषामत्र पश्येत्युक्ते सत्यपि अविमृशद्भिस्तत्कृत्यं न दृश्यते न ज्ञायते ८ वीना पक्षिणां नायको गरुडस्तस्य पतिर्विष्णुस्तस्य ९ 'हिरण्यकशिपु' इत्यर्थः १० हिरण्य सुवर्णम् ११ कशिपुस्तल्पम्, तव शत्रवो निद्रिता भवन्त्विति भावः १२ कमारिः श्रीकृष्णो वो युष्मानवतु रक्षतु कथंभूतः कमारिः? कोलाकृतिः, कोलस्य सूकरस्य रूपं यस्य सः पु० क०, अपारेव अपारे संसारे क्वणति रमति तथा यद्वा,—अपारे समुद्रे वसतीति क्षीरमं, समुद्रशायीत्यर्थः पु० क०, मोरोहंसः मायाः लक्ष्म्या उरो वक्षस्तत्र हंस इव हंसः पु० क०, जलोदरी जले उदरे उदरं गृहं यस्यास्तीति सः पु० क०, आत्तलीलः आत्ता गृहीता लीला विलासो येन सः पु० क०, वाधलः वा निश्चयेन अघं लुनातीति सः पु० क०, भूकलः भुवं कलयति उद्धरतीति सः १३ हे वरानने! अहं रामे अतिरमे कथंभूते रामे अतिरामे अतिकान्ता रामा येनासौ तस्मिन्शुद्धे ब्रह्मणि पु० क०, मनोरमे मनो रमयतीति तस्मिन् कथंभूतः अहम्? रामरः राम एव रा द्रव्यं यस्य सः यत कारणात् मे मम सहस्रनामभिस्तुल्यं रामनाम अत इति कारणात्। अथवा अहं रामे अतिरमे कथंभूते रामे? वरानने वरमाननं यस्यासौ तस्मिन्, उत पार्वत्याः संबोधनं वा कथंभूतं रामनाम? सहस्रनामतत् सहस्रनाम तनोतीति सहस्रनामतत् 'रमन्ते योगिनो यत्र परानन्दे चिदात्मनि। अतो रामपदेनासौ परं ब्रह्माभिधीयते ॥' इति १४ गानसरस्वती यथा कैलासं नगं नयति तथा न गङ्गा न सरस्वती प्रापयति १५ मोह माया राग मद मत्सर मान दम्भ द्वेष इति प्रथमाक्षरानुक्रमेण ग्रहणम्

१ नतेन नम्रीभूतेन २ हे वामन वासयतीति वासनस्तस्य संबुद्धौ त्वं भुवनत्रयं अव रक्ष पालय कथंभूतं भुवनत्रयम्? सर्वभूतनिवासि सर्वाणि भूतानि निवसन्त्यस्मिंस्तत् हे असुदेव प्राणेश्वर! इना कामादीनां वासितं स्यं अन्तं कुरु हे वासुदेव! ते तुभ्यं नमः अस्तु ॥ अथवा असुवे न स्तौतीति असुवः तस्मै स्तोतुमशक्याय वसु भिदां ददातीति वासुदेवः तस्य संबुद्धौ हे वासुदेव! अथवा वसुदेवशब्दितं शुद्धं सत्त्वं तत्र भवो वासुदेवस्तस्य संबुद्धौ ते तुभ्यं नमः अस्तु असून् ददातीति असुदेवः, यद्वा, असूनां देवः असुदेवः हे असुदेव ॥ गणेशपक्षे,—हे सर्वभूतनिवासीन सर्वभूतैः सह निवासकारी रुद्रः स इनः पितृत्वात्स्वामी यस्येति तथोक्तस्तथा हे अम्बासुत! अम्बा पार्वती माता तस्यै सुखं ददाति तथोक्त हे पार्वतीनन्दनेत्यर्थः तथा हे दव इ महीं वाति भक्तानुग्रहीतुं प्राप्नोतीति तत्संबुद्धौ ते तुभ्यं नमो नतिरस्तु त्वं भुवनत्रयं त्रिलोकीं अवसि पालयसि कथंभूतं भुवनत्रयम्? अवासितम् वास आश्रयो जातो यस्येति वासितम्, न वासितं अवासितम् निराश्रयमित्यर्थः कया अवसि? वास एवाश्रय एव नौः दुःखसागरतरणाय हेतुभूता तरी तया किं०, सुदे शोभनप्रदे वरदानपरायणे वरद समूहे श्रेष्ठे इति शेषः ॥ हरिपक्षे,—हे इन स्वामिन्! तथा हे अम्बासुद अम्बावन्मातृवत् सु शोभनं ददातीति हे तथोक्त तथा हे इव ई लक्ष्मीं वाति प्राप्नोति स इव तत्संबुद्धौ यद्वा,—हे अम्बासुदेव इत्येकं संबोधनपदम् अम्बा माता असुदः प्राणदाता पिता कथ्यते तथैव लक्ष्मीं वाति प्राप्नोतीति हे तथोक्त जगतां मातृत्वं पितृत्वं चेति संबोधनाभिप्रायः ते नमोऽस्तु ३ चन्द्रविकासिभिः कुमुदैरित्यर्थः ४ बलदे ध्यानमान ५ आकाशम् ६ सप्ताश्व, सूर्य इत्यर्थः ७ संकोचम् ८ पद्मानाम् ९ य इव सद्मेव आचरति १० पुष्पाणाम्, पक्षे,—देवानाम् ११ अ इव विष्णुरिवाचरति १२ भव इव शिव इवाचरति १३ कलापो भूषणं तद्दरणात्, पक्षे—कलापश्चन्द्रस्तद्धरणात् १४ जरारहितैस्तरुणैः सेव्य; पक्षे,—निर्जरैर्देवैः सेव्य १५ २१, पक्षे,—चन्द्रे १६ वृत्तान्तम्, पक्षे,—उदाराख्यम् १७ हर तत्त्वेन सत्यत्वेन पक्षे,—दन्तत्वेन दकारान्तत्वेन १८ अपगतो धुकारो यस्मात्तेन १९ मधुकरपतिर्भिकरपतिस्तेन २० यकाररूपौ दंपती दन्तीत्यर्थः

विगतविकारो विनायको लक्ष्म्या ॥ ४६ ॥ [2]उपरिगत हि सवर्ण हृत्वा करतो ददामि गन्तु मे । धन्य सरोजयुगल त्यक्त्वा स्तनयुगमधारयद्राधा कृष्ण ॥ ४७ ॥ [3]अच्युतभक्तिवशादिह समभावस्तत्प्रसङ्गेन । सारमतेरभ्युदयति रतिरिति नैवाद्भुत किंचित् ॥ ४८ ॥ [4]मञ्जुलधी समावितगुणे क्वचिन्नापदाधारे । अयि सखि तत्रोपपतौ मम चेतो न त्वनीदृशे पत्यौ ॥ ४९ ॥ [5]अयि सखि शस्त सखिवत्पतिरिति किं त्व न जानासि । शस्तोऽतिसखिवदुपपतिरित्यालि कथ त्वयापि नावोधि ॥ ५० ॥ [6]द्वंद्वो [7]द्विगुरपि चाह [8]मद्गेहे नित्यमव्ययीभाव । [9]तत्पुरुष कर्म धारय येनाह स्या बहुव्रीहि ॥ ५१ ॥ [10]त्वं द्विरदमहमाना निन्दति बाला दिवा निश शम्भुम् । राहुमपि रामचन्द्र रामानुजमपि च पन्नगारातिम् ॥ ५२ ॥ स जयति चित्रचरित्रो यस्य हि [1]वरचरणपुष्करकरेणु । [2]महिषीमृषिभिमहम्य प्राजीजनदपि [3]वृषोदये [4]हेतु ॥ ५३ ॥ रविसुतहतगोकर्ण श्रुतिविषयगुणाम्बरो वनात्मधर । नरकशिरा जगदखिल चिरमव्याद्[5]समरन्पाणि ॥ ५४ ॥ सायकसहायबाहो [6]मकरध्वजनियमितक्ष्माधिपते । अब्जरुचिभास्वरत्ने भातितरामनिप [7]श्लोक ॥ ५५ ॥ [10]वाताच्छीतिररिभोऽर वो हरतान्महासुरीदयित । श्रीडमाज्यानौका वार्ताहामोऽसमस्ताना ॥ ५६ ॥ लम्बोदर तव चरणाबादरतो यो न पूजयति । स भवति विश्वामित्रो [12]दुर्वासा गौतमश्रेति ॥ ५७ ॥ [14]अम्बरमम्बुनि पत्रमराति पीतमहीनगणस्य ददाह । यस्य वधूस्तनय गृहमब्जा पातु स वो हरलोचनवह्नि ॥ ५८ ॥ [15]वसुमित्रसुतवधुगाहनारातिभूषणशिरोगेहलम्बिनी । तन्नवैरिभगिनीपते सदा पातु मा कमललोचनो हरि ॥ ५९ ॥ [16]अतनुज्वरपीडितामि बाले तव सौख्याय मतो ममोपेनाम । [18]रसमर्पय वैद्यनाथ नाह भवदावेदितलङ्घने समर्था ॥ ६० ॥ [20]अङ्गुलेपुरीविलोकन न धरासुन्दर कदाचन । अथ तत्रतिवारहेतवे[22]ऽदमयन्तीपतिलोचन भज ॥ ६१ ॥ [23]राम सीता लक्ष्मण जीविकार्थं विक्रीणीते यो नरस्त च धिग्धिक् । अस्मिन्पद्ये योऽपशब्दान्न वेत्ति व्यर्थप्रज्ञ पण्डित त च

---

१ विगतो विकारो यस्मात्स विनायक, नायक इत्यर्थ २ कृष्णो राधिका पृच्छति उपरिगत सवर्ण समानवर्ण सरोजयुगल करतो हृत्वा स्वहस्तेन आदाय मे गन्तु देहि तत्तो राधया तस्मिन्नात्र गृहीते सति उवर्णेन परिगत युक्त सवर्णरहित एवाङ्गुष्ठ सरोजयुगल उरोजयुगलमेव इति धिया कमलयुग त्यक्त्वा स्तनयुगलमेव कृष्णो धारयत् ३ इ० संसारे अच्युतभक्तिवशात्समभाव समत्व शत्रुमित्रादिषु तत्प्रसङ्गेन भक्तिप्रसङ्गेन सारमते श्रेष्ठबुद्धे पुस रति प्रीति अभ्युदयति इति न किंचिदद्भुतम् ॥ व्याकरणपक्षे,—भो अच्युतभ' अच्युता अहीना भा प्रतिभा यस्य क्विब्वशात् क्विप्प्रत्ययवशात् स प्रसिद्धो समाव सकारस्याभावो लोप भवतीति शेष तत्प्रसङ्गेन क्विप्प्रत्ययप्रसङ्गेन रमतेर्धातो सा रति अभ्युदयतीत्यपि नाद्भुतम् रमु क्रीडायामित्यस्माद्धातो क्तिनि अनुदात्तोपदेशेति मलोपे रतिरिति रूप सिध्यति ४ कापि विदुषितरा नायिका सखीं प्रति वदति अयि सखि ! तत्र तस्मिन्नुपपतौ मम चेत अस्तीति शेष कीदृशे ! मञ्जुलधी मञ्जु सुन्दर स चासौ रघुरिष्टश्च पु० की० संभावित गुणे संभाविता गुणा सौन्दर्यादयो यत्र पु० की० क्वचित्कदाचिदपि न आपदाधारे आपद्रहिते इत्यर्थ अनीदृशे उक्तगुणरहिते पत्यौ मम चेतो नास्तीति ॥ व्याकरणपक्षे,—उपपतौ उपपतिशब्दे मम मनोऽस्ति, की० मञ्जुला घिसंज्ञा यस्मिन् संभावित 'घेर्ङिति' इति गुणो यस्य ना इति पदस्य 'आङो नाऽस्त्रियाम्' इति सूत्रविहितस्याधारे आश्रये अनीदृशघिसंज्ञागुणनादेशरहिते केवले पतिशब्दे ५ अयि सखि ! पति सखिवत् शस्त सिद्धवद्भिषमनीय इति त्व किं न जानासि ! सखी प्रत्याह—हे आलि ! उपपतिर्जार अतिसखिवत् अतिशयितसखिवत् शस्त इति त्वयापि कथ नावोधि ॥ व्याकरणपक्षे—पतिशब्द शस्त शस इति शस्त पञ्चम्यन्तात्शसि द्वितीयाबहुवचनात्परं सखिशब्दसखिवत्स्वरूपो ज्ञेय नादेशाभावेन अयैक्यात् उपपतिशब्द शस्त द्वितीयाबहुवचनात्परं अतिसखिशब्दवत् नादेशभाक् ६ यत्र स्त्रीपुरुषरूपद्वन्द्वात्मक ७ द्वौ गावौ यस्य ८ मद्गो वस्तुमात्रम् अव्ययी व्ययाभाववान् मद्गेहे कस्यापि वस्तुनो व्ययो नास्तीत्यर्थ यद्वा अव्ययीभवन अव्ययीभाव ९ तत्पादे पुरुष ! येनाह बहुव्रीहिर्बहुधान्यविशिष्ट स्यां तत्कर्म धारय कर्म- मनागप्यदक्रमतिरस्करणमत्र चित्रम् १० गजगमने भवानीदक्षु, पन्नगवेशात्मन, मत्याधवित्रेषणात्मचन्द्रम् । रामवदनप्रसादरामानुजम्, पन्नगारिगरुडवाहनारातिं गरुडं निन्दतीति भाव

१ वर श्रेष्ठो यश्चरणकमलसंबन्धी रेणु- २ ऋषिश्रेष्ठस्य गौतमस्य पत्नीम् ३ वृष मुक्तम् ४ उत्कृष्टचरणगुण्डाभो गज सिद्धस्य महिषीं जनयामास वृषो वृषभस्तस्योदये हेतुरिति चित्रम् ५ न समोऽसमो विषम स चासौ रुक् च समरुक् शूलरोग त्रिशूलमित्यायुधविशेष स पाणौ हस्ते यस्य स शूलपाणि शिव इत्यर्थ- ६ सागर ७ समुद्र ८ चन्द्र ९ यम १० वाताच्छीतिरिति वातमपि स वानाद् शेषस्तस्मिन्शीति शयन यस्य स अरिभ अरि चक्र धरति स वार्ताहाम वार्ताहो मेघस्तस्येवाभाति स असमस्ताना असमस्त खण्डित अन शकट येन स नौका न मूर्ध्नि श्रोत्र निवासस्थान यस्य स ईश्वर ई लक्ष्मीस्तत्पतिर्विष्णुरर्द्धं पुन वो युष्माक श्रीडमाज्या अन्वयन्ति ता आजाम्बरादश्च ता आज्या अज्ञानकृतसंसारभ्रमाणि ता अंसवीरत्वादिभि ११ जगत् चतु १२ भगिनन्नक्ष १३ पतु १४ स शम्भो वो युष्मान्पातु यस्मात्परं पीतम् यस्य गृहमम्बुनि यस्य पत्र वाहन अहीनगणस्य पतिर्गरुड- यस्य वधूर्लक्ष्मी कमला यस्य तनय हरलोचनवह्नि ददाह १५ वसुमित्रमग्निस्तस्य सुतवधू गाहनारातिभूषणशिरोगेहलम्बिनी स्त्रीसंभूता शिवशिरोलम्बिनी गङ्गा तस्या भगिनी वैरिणी पाण्डवपत्नी द्रौपदी तस्या पतिरर्जुनस्तस्य कृष्ण- १६ सरान्, पक्षे,-काम १७ महनम्, पक्षे,-सर्वांशसिद्धि- १८ भेषजम्; पक्षे,-प्रीतिम् १९ अपकथे; पक्षे,-शङ्कने २० अनवद्य विपरीतार्थे २१ महत्त्वापरत्वम् २२ अनन्योचन शिवम् २३ 'जीविकार्थे चापण्ये' इत्यत्र अपण्ये इत्युक्तत्वात्पण्यार्थे कन्न इत्येव रामक सीतका लक्ष्मणक इति प्रयोग एव सत्

धिग्धिक् ॥ ६२ ॥ गोगेन्द्राहनभोजनभक्ष्योद्भृतपमित्र सपत्नजशत्रो । वाहनवैरिकृतामनतुष्टा मामिह पातु जगत्त्रयतुष्टा ॥ ६३ ॥ नदीज लङ्केशवनारिकेतुर्नगाह्वयोनाम नगारिसूनुः । एषोऽङ्गनावेषधरः प्रमाथी जित्वाद्य वो नेष्यति चाद्य गाश्च ॥ ६४ ॥ गोकर्णराडाभरणं यदीयं यद्गव्यहव्यादजमाददाह । कुमेनचूडामणिरादिगन्तात्पायादपायाद्गुरगात्मजार्धः ॥ ६५ ॥ विलासिनी काञ्चनपट्टिकायां पाटीरपङ्कैर्विरही विलिख्य । तस्याः कपोले व्यलिखत्पवर्गं तवर्गमोष्ठे चरणे टवर्गम् ॥ ६६ ॥ काचिद्वियोगानलतप्तगात्री प्राणान्समाधारयितुं लिलेख । बाह्वोर्भुजंगं हृदि राहुबिम्बं नाभौ च कर्पूरमयं महेशम् ॥ ६७ ॥ नेतः प्रयाणोन्मुखतां समीक्ष्य नैक्षत्रमुक्तावलिमस्य कण्ठे । अथा-रयत्सा स तु वासराणां संख्यापरोऽभूत्सखि कोऽत्र भावः ॥ ६८ ॥ गौरीक्षणं भूधरजाहिनाथ पत्त्र तृतीय दयितोपवीतम् । यस्याम्बरं द्वादशलोचनाख्य आस्था सुत पातु

सदाशिरो च ॥ ६९ ॥ पुंष्पेषुमाता पुरुषायमाणा लज्जावती विश्वसृजं विलोक्य । नाभीसरोजे नयनं मुरारेर्वामेतरं वारयति स्म चित्रम् ॥ ७० ॥ मृगत्रयं भाति वपुष्यवेशे फलानि चत्वारि सुमानि पञ्च । कपोलषट्कं प्रमदालतायाः पृच्छन्ति मध्ये विदुषः कवीन्द्राः ॥ ७१ ॥ इन्दीवराक्ष्या स्फुटविद्रुमोष्ठ्या सकेतमुद्दिश्य वने चरन्त्याः । चौरैः समस्ताभरणानि हृत्वा नासामणिर्नोऽपहृतः किमेतत् ॥ ७२ ॥ नृसिंहदेवे चलिते भरेण प्रत्यर्थिभूतैः क्रियते भरेण । कण्ठे कुठारः कमठे ठकारः शेषे ढकारस्तपने चकारः ॥ ७३ ॥ कुम्भेनसुपीनयनाश्रयाशादग्धोन्मदा दर्दुरहर्षकाले । स्वंजमभक्षप्रियभोजनाशा नृत्यन्ति भीमानुजगोजभाजः ॥ ७४ ॥ शिरसि देवनदीं पुरवैरिणः सपदि वीक्ष्य धराधरकन्यका । निविडमानवती रमणाङ्कके क्वचन चुम्बनमारभते स्म सा ॥ ७५ ॥ काचिद्विलोलनयना रमणे स्वकीये दूरं गते सति मनोभवबाणखिन्ना । लक्तुं शरीरमचिरान्मलयाद्रिवायु सौरभ्यशालिमहो पिबति स्म चित्रम् ॥ ७६ ॥ कान्ता रुचिं

१ गवागच्छतीति गोगः शिवस्तस्य कार्तिकेयस्तस्य वाहनं मयूरस्तस्य भोजनं भक्ष्यं सर्पस्तस्य भक्ष्यं वायुस्तद्भूतो हनूमांस्तं पातीति स तस्य सुग्रीवस्तस्य मित्रं रामस्तस्य सपत्नो रावणस्तं नन्दयतीति तस्य शत्रुरिन्द्रस्तस्य वाहनं ऐरावतस्तस्य वैरी सिंहस्तेनोपविष्टा अत एव सर्वोपरि तुष्टा अम्बिका मां पातु रक्षतु. २ भो नदीज गङ्गातनय भीष्म! एष दृश्यमानः अङ्गनावेषधरः स्त्रीरूपधारी लङ्केशवनारिकेतुः रावणवनभञ्जकहनूमद्ध्वजः नगाह्वयोऽर्जुननामा नगारिसूनुरिन्द्रपुत्रः भो भो कौरवाः! जय प्रमाथी हन्ता अद्य वो युष्माञ्जित्वा गाश्च नेष्यतीत्यर्थः. ३ उः शिवः तु धरणि अपायाच्छ्रात्पायाद्रक्षतु स कः गोकर्णा सर्पास्तेषां राट् वासुकिः यदीयं आभरणं भूयते तद्भव्यम् गोरिदं गव्यं, गव्यं च तद्धव्यं च गव्यहव्यम्, गव्यहव्यमत्तीति गव्यहव्याद् वह्निः यस्य शिवस्य गव्यहव्याद्वह्निरित्यनेन त्र्यम्बकस्य तृतीयनेत्रोत्थवह्निरित्यर्थः स अजः अनङ्गः आम्नाद यस्य तृतीयनेत्रोत्थो गव्यहव्याद्वह्निः मदनं भस्मीचकारेत्यर्थः निभूतः भानां नक्षत्राणां इनः स्वामी चन्द्रः स एव चूडामणिमुकुटरत्नं यस्य सः पु० क० अगात्मजा पार्वती अर्धे अर्धं वा यस्य सः आदिगन्तात् दिगन्तेभ्य आ इति दिगामन्तं मर्यादीकृत्य आदिगन्तं तस्मात्. ४ चन्दनद्रवैः ५ गले. ६ पवर्गस्य ओष्ठस्थानीयत्वात् ओष्ठाभ्यां तव चुम्बनं करिष्यामीति सूचितम्. ७ तवर्गस्य दन्तस्थानत्वाद्दन्तैस्तवौष्ठौ खण्डयिष्यामीति सूचितम्. ८ टवर्गस्य मूर्धस्थानत्वाद्यदि त्वं स्थास्यसि तर्हि त्वां शिरसा नमामीति सूचितम्. ९ सर्पश्वासभीत्या प्राणा स्वतो न निर्गमिष्यन्तीत्याशयेन बाह्वोर्भुजगं लिलेख. चन्द्रश्च स्वभागतया श्रुतिसिद्धः सूतानां मनो भ्रष्टीतुमागच्छेदित्याशयेन हृदि राहुम्, मन्मथत्रासाय शिवं च लिलेखेति भावः. १० नक्षत्रमालाधारणेन नक्षत्रोदयवेलाया-मागमनं कर्तव्यमिति तया सूच्यते. वासरसंख्याकरणेन सप्तदिन-मध्य एव मया गन्तव्यम् इति तेन सूचितम्. ११ स सदाशिवो वो युष्मान्पातु. स कः? यस्य गौः वृषभः पत्त्रं रथः तथा ईक्षणं तृतीयं यस्य भूधरजा पार्वती दयिता यस्य अहिनाथः शेषः उपवीतं यस्य अम्बरं वस्त्रं आशा दिशो यस्य. द्वादशलोचनाख्यः कुमारः सुतो यस्य इत्यन्वयः.

१ पुष्पेषोर्मदनस्य माता लक्ष्मी पुरुषायमाणा पुरुषवदाचरन्ती, विपरीतरतं कुर्वतीत्यर्थः, विश्वसृजं भगवन्नाभिसरोजस्थं ब्रह्माणं विलोक्य लज्जावती सती मुरारेर्दक्षिणं नयनं वारयति स्म. यतो भगवन्नेत्रे हि सूर्यचन्द्रात्मके, तत्र दक्षिणस्य सूर्यात्मकत्वात्तद्वारणेन सरोजं मुकुलितं भवेत् ततश्च ब्रह्मापि सरोजकोशेऽन्तर्हितो भवेत् इति मनसि कृत्वा तद्वारयामासेति भावः. २-३ उपरि अक्ष्णो नीलच्छाया अधस्ताच्च ओष्ठस्य रक्तवर्णच्छाया तयोः प्रतिबिम्बितं नासामौक्तिकं गुञ्जाफलमिति मनसि कृत्वा चोरैर्न हृतम् इत्यभिप्रायः. ४ नृसिंहदेवे सेनाभरेण सह यात्रार्थं चलति प्रत्यर्थिभूतैः शत्रुभूपतिभिः सेनाभिः सह पलायमानैर्भरेण साध्वसाधिक्येन कण्ठे कुठारः क्रियते कुठारघाततुल्या पीडानुभूयते. तथा च भरेण सेनासमूहगुरुत्वेन कमठे ठकारः क्रियते भूभरधरः कूर्मावतारोऽङ्गसंमर्दभीत्या पाणिपादमुखमन्तः संकोच्य ठकारतुल्योऽभूत्. तथा केवलं मण्डलाकृतिस्तस्थौ तथा शेषोऽपि एवमिव भुवः प्रदेशेऽधिकभरेण ढकारतुल्यो वक्रीकृतग्रीवकुण्डलितोऽभूत्. तपने सूर्ये च चकारः समुच्चयः क्रियते अतिभीत्या तेषां शत्रूणां शतसूर्यं नभस्तलं पश्यतां इत्यर्थः. ५ कुं पृथ्वीं धरन्ति ते कुभाः पर्वतास्तेषामिनः स्वामी हिमाचलस्तस्य सूः पुत्री पार्वती तां प्रीणातीति प्रीणः महादेवस्तस्य नयनस्य आश्रयाग्नौ नेत्रवह्निस्तेन दग्धो यः कामस्तेन उन्मदा उन्मत्ता. ६ दर्दुराणां मण्डूकानां हर्षकाले वर्षाकालस्तस्मिन्. ७ खसात् जन्म येषां तानि स्वजन्मानि खापत्यानि तानि भक्षयन्ति ते स्वजन्मभक्षाः सर्पास्त एव प्रिया भोजनस्य आशा येषां ते ईदृशाः मयूरा इत्यर्थः. ८ अत्र भीमानुजगोजभाजः इत्यस्य भीमानुजोऽर्जुनस्तत्संज्ञका ये गोजा गोः पृथिव्या जायन्ते ते गोजा वृक्षास्तत्स्वेविन स्फुरिताऽर्जुनवृक्षा येनाधिष्ठितं इति यावदित्यर्थः. एषा टीका विरश्चमुखमण्डलेऽपि न्यूनैव. ९ सविषे गले. १० मलयस्थचन्दनेष्वनिशं सर्पनिवासात्तत्सुगन्धसंपृक्तस्य वायोः सविषत्वाच्चाघ्राणेन हठादेव मे मरणं स्यादिति बुद्ध्या न पपाविति गूढाशयः. ११ कान्ता हारे रुचिं धत्ते, मुनिजनो हरे रुचिं धत्ते, अवियोगी तरुणो हिमकरे रुचिं धत्ते, कामो मकरे निजचिह्नभूते रुचिं धत्ते, रक्तमणिकङ्कणयुक्तो सह करे कुचभूषणेन सह पयोधरयुगे च रुचिं धत्ते

मुनिजनसरणोऽवियोगी वामश्च रत्नमणिरुज्ज्वलकङ्कणेन । धत्ते पयोधरयुगे कुचभूषणेन हार हर हिमकर मकरे करे च ॥ ७७ ॥ निर्जयति नयनाभ्यां कैरव पङ्कज च श्लथयति चरणाम्बु नलचर्यं पयोधे । उरसि लसति यस्य श्रेयसां सम्प्रदाय स फणिनमधिशेते पद्मया पद्मनाभ ॥ ७८ ॥ अहिरिपुपतिकान्तातातसबद्धकान्ताहरतनयनिहन्तृप्राणदातृध्वजस्य । सरिसुतसुतकान्तातातसपूज्यकान्तापितृशिरसि पतन्ती जाह्नवी न पुनातु ॥ ७९ ॥ उदितवति परस्मिन्प्रत्यये शास्त्रयोनौ गतवति विलयं च प्राकृतेऽनिप्रपञ्चे । सपदि पदमुदीत केवल प्रत्ययो यस्तदियमिति च वक्तु क क्षम पण्डितोऽपि ॥ ८० ॥ हरिद्रायां राहुप्रसरपिहितेच्छापरिषदि प्रयुक्तालङ्कृत्य निपुन उरुता दुर्गकुरटीम् । वय मार्गापता प्रहर इति सेनाधिपकृतामभात्येभ्यो लेखा प्रतिदिशति सिंहक्षितिपति ॥ ८१ ॥ गता सा किं स्थानं पथि सह तया का स्थितवती नृपेणेत्थं पृष्टा सखि चतुरदूती स्थितवती । विलोक्यालंकारं निजमथ च शाकं नरपति निराकाङ्क्षं चक्रे कथय कथमेतत्प्रभवति ॥ ८२ ॥ स्नाता ते नो हारो रजतगिरिमूले न धनद सुकेशीनां मध्ये विहरति न कामो नरयुता । रमान्ते नैवाब्धिर्विबुधनगरीसीम्नि न सुरस्तथाप्यस्मिन्पद्ये स्फुटमवतु देवं किमपि न ॥ ८३ ॥ काचिद्बाला रमणवसतिं प्रेषयन्ती करण्डं सा तन्मूले समयमलिखद्व्यालमस्योपरिष्टात् । गौरीनाथ पवनतनय चम्पक चास्य भावं पृच्छत्यार्यान्प्रति कथमिदं मल्लिनाथ कवीन्द्र ॥ ८४ ॥ मन्ये सन्वदमि बहुधा दीयते नीयते ध दाधातुना भवति सदृश रूपमेषा चतुर्णाम् । द्वौ दानार्थौ भवति च तथा पालने खण्डने वा नो जानीम कथयति भवान्कस्य धातो प्रयोगम् ॥ ८५ ॥ चक्षुर्द्वादशनीलनीरजयुत सप्ताम्बुजोद्भासित नित्य षोडशशोणपद्मरुचिरं धाराभिश सेवितम् । क्षीराम्भोधिगृह सहस्रदलसत्पर्यङ्कविश्रान्ति यत्पायाद्व कमलाङ्कसन्निशयन तन्नीलरोचिर्महः ॥ ८६ ॥ रामं वानरवाहिनी पुररिपु राहु रवे सारथि कुम्भीगर्भसमुद्भव मुररिपु मारस्य मौर्वीरवम् । तन्वी नूतनपल्लवैर्विरचिते शय्यातले शायिनी सख्या वीजितना-

---

[१] स पद्मनाभ पद्मया सह फणिनि शेषमधिशेते यस्य नयनाभ्यां चन्द्रसूर्यलक्षणाभ्या कैरव पङ्कज च विरमति यस्य चरणाम्बु गङ्गा नलपयोधब्रह्मचर्यं श्लथयति दूरीकरोति गङ्गाया समुद्रपत्नीत्वात्, यस्योरसि श्रेयसां संप्रदाय कौस्तुभमणिर्लसति एवविध पद्मनाभ फणिनमधिशेते २ अहि सर्पस्तद्रिपुर्गरुडस्तत्पतिर्विष्णुस्तत्कान्ता लक्ष्मीस्तत्तात समुद्र स सम्यग्बद्धो येन स रामस्तत्कान्ता जानकी तस्या हरो हर्ता रावणस्तत्तनय इन्द्रजित्तन्निहन्ता लक्ष्मणस्तत्प्राणदाता हनूमान्स ध्वजे यस्यैवंभूतोऽर्जुनस्तस्य सखा कृष्णस्तत्सुतो मदनस्तत्सुतोऽनिरुद्धस्तत्कान्ता उषा तत्तातो बाणासुरस्तस्य सम्यक्पूज्य शिवस्तत्कान्ता पार्वती तत्पिता हिमालयस्तच्छिरसि पतन्ती जाह्नवी भागीरथीत्यर्थ ३ सिंहक्षितिपति सेनाधिपकृता लेखा अमात्येभ्य प्रधानेभ्य प्रति दिशाति कथयति इति तेषां प्रतीतिरस्तिम् वय मार्गापेता अकराब्देन इव लक्ष्यते प्रयुक्त इव सेनोपेता हरिद्राया निशायां राहुप्रसरपिहितेच्छापरिषदि सत्याम् राहुशब्देन तम, हितशब्देनाच्छादनम् इच्छाशब्देन आशा दिशा, परिषच्छब्देन मण्डलम् प्रयुक्तो योऽलंकार हार तस्य कृत्वे प्रहारार्थम् निपुन गरुत्मान् गरुत्मत् उच्यते विहारतुलानां पक्षाणां विरक्षाणाम् दुर्गकुरटीन् कुरटीशब्देन नगरी लक्ष्यते दुर्गनगरी प्रहर इत्यर्थ ४ कश्चिद्राजा कांचिन्नायिकां स्वगृहमानयत् तत्र च तद्गमनसमागम इच्छा ता स्वगृह प्रापयितु दूतीमादापयति स [illegible] । दूती ता स्वगृह प्रापय्य पुना राजनिकट आगत्य स्थितवती ता प्रत्याह राजा सा कि स्थानं गता गतवत्या तया सह पथि मार्गे का स्थितवती एवं राज्ञा पृष्टा चतुरा दूती स्थितवती सती निजमलंकार 'पाहाची' इति महाराष्ट्रभाषाप्रसिद्धं तथा शाकं 'मेथी' इति महाराष्ट्रभाषाप्रसिद्धं शाकविशेषं चावलोक्य तावन्मात्रेणैव नरपति निराकाङ्क्षमुत्तररहित आकाङ्क्षारहित चक्रे एतदलंकारशाकावलोकनं कथं प्रभवति राज्ञो नैराकाङ्क्ष्य संपादने कथं समर्थं भवतीति कथयेति कविप्रश्न अत्र प्रथमस्य प्राकृतपर्यायेऽर्थे 'पाहाची' इति हिन्दीभाषयोत्तरम् द्वितीयस्य सु स्वनामप्रसिद्धार्थक 'मेथी' इति हिन्दीभाषायोत्तरमिति तात्पर्यं बोध्यम्

१-२ प्रियनिवासम् ३ करण्डान्वितपुष्पसारभ गन्धवाहो हरेदिति तद्भक्षक मर्त्यम् ४ पुष्पबाणो बाणाय हरेदिति तद्धरित [illegible] ५ एवं पुष्प स्वकरे शोषयेदिति चम्पकार्थे एव मक्षमतुमा हर्तुं प्रवृत्त भय जननाय हनूमन्तम् ६ तन्मकरन्द भृङ्गो हरेदिति चम्पकमधिलिखितिति भाव चम्पके भृङ्गा न गच्छन्तीति प्रसिद्ध ७ [illegible] सन् [illegible] बहुधा वारंवार दीयते दीयत इति वदसि दायत इति रूप चतुर्णामपि धाधातुना सदृश भवति तन्मध्ये द्वौ दानार्थौ, दाण् दाने, डुदाञ् दाने, इति एक पालने, देङ् रक्षणे इति एक खण्डने, दोऽवखण्डने इति एव मध्य भवान्कस्य धातो प्रयोग कृत्वा वदति त न जानीम ८ तन्नो हरतु श्यामप्रभ महस्तेज कृष्णलक्षण वा युष्मान्पायात् तत्किंभूतम् कमलाङ्कसन्निशयने लक्ष्मीसनाथ शय्यम् पु० टि० सहस्रदलसत्पर्यङ्कविश्रान्ति सहस्रदलादिव्यासनधेरभिनम् पु० टि० क्षीराम्भोधिगृह दुग्धसमुद्रनिवासम् पु० टि० धाराभि नाभिसरोरुहस्थेन ब्रह्मणा अनिश सेवितमध्यासितम् पु० टि० षोडशशोणपद्मरुचिरं पादशोणसमस्तमनोहरम् षोडशशोणपद्मानां विवृति -विष्णोश्चत्वारो हस्ता द्वौ चरणौ तावन्त एव ब्रह्मा द्वौ करौ द्वौ चरणौ लक्ष्म्या इत्येवं षोडशशोणपद्मरुचिरम् पु० टि० नित्यमनिशम् पु० टि० सप्ताम्बुजोद्भासित सप्तकमलशोभितम् सप्ताम्बुजानां विवृति — चत्वारि मुखानि ब्रह्मण एक नाभिसरोरुहम् [illegible] विष्णोर्मुखम् एक लक्ष्मीमुखम् इत्येव सप्ताम्बुजोद्भासितम् पु० टि० चक्षुर्द्वादशनीलनीरजयुतं शोभमानद्वादशनीलोत्पलयुतम् द्वादशनीलनीरजानां विवृति —अष्टौ नयनानि ब्रह्मण द्वे विष्णोर्द्वे लक्ष्म्या इत्यर्थं द्वादशनीलनीरजयुतम् * कोकिलरक्षककाकवधेच्छया राम सख्यापकवचेन दानववाहिनीम् मन्मथवधेच्छया पुररिपुम् चन्द्रवधेच्छया राहुम् रवे शीतलत्वसिद्धयर्थं गर्भिण्या [illegible] सूरम् च शोषार्थकसमुद्रवधेच्छया [illegible] मन्मथवधेच्छया मुररिपु निनिन्दति भाव कोकिलानां कामोद्दीपकत्वं रमणस्य मौर्वीरवम्

लङ्घन्तपवना वाला मुहुनिन्दति ॥ ८७ ॥ सत्यासक्तमना प्रवृद्धनरकच्छेदी द्विजेन्द्राश्रयो युक्तानेकसुखोद्भवास्पदमल श्रीर्यत्र सराजते । यो गगा च विभर्ति यश्च सशिवो य कामदेहाश्रय मङ्क्षु साम्यमय प्रयातु भवता कृष्णेन रुद्रेण वा ॥ ८८ ॥ येन ध्वस्तमनोभवेन वलिजित्काय पुरा स्त्रीकृतो यो गगा च दधेऽधकक्षयकरो यो बर्हिपत्र प्रिय । यस्याहु शशिमच्छिरोहर इति स्तुत्य च नामामरा सोऽव्यादिष्टभुजगहारवलयस्त्वा सर्वदो माधव ॥ ८९ ॥ [1]यो व्योमाडिनगोऽहरीड्डुपगोयुग्म कगभ्रोऽपभीर्भीमभ्भर्व-र्यसुकी रमारतरसो नाम्ब्रुमुडासीनक । घोसद्यम्ववनम्य-पत्सलिलजो वार्धिस्तपोऽष्टार्धदोरायो गदतिवाड्घादमृतशा पायात्स व कदभा ॥ ९० ॥ लक्ष्मीवन्कृतनृरसू रणद-हि दृधक्क्षम पापडीलाड्ढोऽकलघी वडाछन वडी खाजा

१ अथ भवता सह कृष्णेन रुद्रेण वा साम्य प्रयातु प्राप्नोतु किभू तेन कृष्णेन अर्थवशाद्विपरिणाम किभूत ? सत्यासक्तमना सत्यभा मायामासक्त मनो यस्यासौ नामैकदेशे नामग्रहणम् प्रवृद्धो नरक सुरस्त छिनत्तीति द्विजाना पक्षिणामिन्द्रो गरुडस्तस्याश्रय सेव्य युक्तान्यनेकसुखानि यस्य ब्रह्मणस्तस्य उद्भवो यस्यात्कमलात्तत् यस्या स्पदम् अत्यमलमर्थ यत्र श्रीर्लक्ष्मी राजते योऽग गोवर्धन गा पृथ्वी च बिभर्ति शिवेन सह वर्तमान 'विष्णोश्च हृदय शिव ' इति वच नात् य कामदह प्रद्युम्नस्तस्याश्रय ॥ किंभूतो रुद्र ? सत्यामुमायासक्त चित्त यस्य 'उमा गौरी सती चण्डी' इत्यभिधानात् प्रवृद्ध यन्नरस्य ब्रह्मण क शिरस्तस्य छेत्ता द्विजाना ब्राह्मणानामिन्द्रश्च द्रस्तस्याश्रय अनेकसुखानामुद्भवो यस्य कार्तिकेयस्य तदास्पदम् श्रीर्यत्र संराजते निधिपतित्वात् यो गङ्गा बिभर्ति य शिवया पार्वत्या सह वर्तमान काम द्यति खण्डयति एवविधा या देहा तस्या आश्रय ॥ किंभूत सह ? सत्या सनृता वाक् तत्र लग्न मनो यस्य स प्रवृद्ध यन्नरक दु ख तस्य नाशक द्विजेन्द्रा ब्राह्मणास्तेषामाश्रय युक्तानि योग्यानि यानि अनेकसुखानि तेभ्य उद्भवो यस्य धर्मवातस्या तस्या आस्पदम् यत्र श्री शोभा राजते यो गा वाणीं धत्ते काम ददातीति कामदा देहा इच्छा तदाश्रय २ त्वा सर्वदा स उमाधवोऽव्याद्रक्षतु स क ? येन बलिं जितवानिति बलिजिद्विष्णुस्तस्य काय शरीर पुरा त्रिपुरवधका लेऽस्त्रीकृतोऽस्त्वेन सपादित किंभूतेन ध्वस्तो मनोभवो मारो येन ध्वस्तमदन पु० स क ? यो गङ्गा दध पुन कीदृश ? अन्धकनामा दैत्यस्तस्यान्तकर पु० कीदृश ? यो बर्हो मयूर एव पत्र रथो यस्य स स्कन्द प्रियो यस्य स पु० कीं० स्तुत्यमीड्य नाम यस्य अमरा इति आहु इतीति किम् हर इति किंभूत ? शशिमच्छिर शशि रस्ति यस्मिंस्तच्छशिमत् तादृश शिरो यस्य स हाराश्च वलयानि च हारवलयम् इष्टाश्च ते भुजगाश्च इष्टभुजगा ते हारवलयानि यस्य स इष्टा वल्लभा भुजगा सर्पा हार कण्ठभूषण वलय कटक बाहुभूषण मित्यर्थ यद्वा,–इष्टानि भुजगा एव हारवलयानि यस्येति ॥ हरिपक्षे,– सर्वं ददातीति सर्वद स माधवो लक्ष्मीपति मा लक्ष्मीस्तस्या धवो भर्ता माधव स्वामित्वात् स क ? अयेन भवेनेत्युत्तरमानेन धृतविग्र हेणेत्यर्थ अनो ध्वस्त शकटाकृति दनुज हतवानित्यर्थ अथवा अभ वेनति घोरसंसारसागर प्राक्तनकर्मानुसारेण विद्यते भवो जन्म यस्य स तेन कृष्णलीलामृतविग्रह इति पु० स क ? येनामृतविभागाय रुद्रमोहार्थे वा बलिजिदसौ कायश्चेति पुरा स्त्रीकृत स्त्रीभाव प्रापित पु० की० य अग गोवर्धनम् गां पृथ्वीं च दधे पु० की० य अन्ध अगाधे के जले क्षय गृह करोतीति विष्णुस्तु जलशायीति पु० की० बर्हिणो मयूरस्य पत्राणि बर्हाणि पिच्छानि प्रियाणि वल्लभानि यस्य स पु० की० अमरा यस्य इति स्तुत्यं नाम आहु इतीति किम् शशिम च्छिरोहर इति शशिन चन्द्र मथ्नातीति शशिमत् राहु तस्य शिर हरतीति स तथा इष्ट भुजगहा गरुडो यस्य स तथा अर सुद र्शन वलय यस्य स तथा रत परब्रह्मणि लयो यस्य स स्वत्व्य इति

१ क जल ददातीति कदास्तेषा भा इव भा यस्य स श्रीकृष्णो वो युष्मान्पायाद्रक्षतु स क य व्योमाटिनग व्योमाटा पक्षिणा इनो गरुडस्तेन गच्छतीति स तथा अह्ना इट् अहरीट् सूर्य उडु पश्चन्द्रस्तौ गोयुग्म नेत्रद्वय यस्य स तथा कु पृथ्वी अगा गिरय तान्धरतीति तथा अपगता भीर्भय यस्मात्स तथा पु० क० भीम भ्भयसुकी कभूणा देवाना अरय कभ्भरय भीमाश्च ते कभ्भरयश्च भीमभ्भरय भीमभ्भरीणा असून् प्राणान् किरतीति स कभव अरय तेषामरयो दैत्या भीमाश्च ते कभ्भरयश्च भीमभ्भयश्च तेषामसून् किरति कलेवराद्वियोजयति तथा तथा रमा लक्ष्मी तस्या रते क्रीडाया रस आसक्तियस्य स अप्सु रुहति इति अब्रुट् कमल नामाबुब्रुटि आसीन क ब्रह्मा यस्येति तथा पु० क० घोसदा देवानां चम्वा सर्वेन अवनम्य पत्सलिलज चरणकमल यस्य वाध स्तपि तानि तथा अष्टार्ध चत्वारो दोषा बाहवो यस्य आद्य अनादिरि त्यर्थ गदी गदाधर अमि पक्ष वहति मोक्ष ददाति २ हे लक्ष्मीवन् त्व मा सेवक अभ्या रक्ष कथभूतस्त्वम् ? कुनकू कुन को पृथिव्या ऊ अवन रक्षण यस्यासौ पु० क० अग्र सूयते उत्पद्यते असौ सू न सू असू अज इत्यर्थ पु० क० रणदहिन् रण सग्राम ददति ते रणदा दानवास्तान्हिनस्ति असौ शत्रुहा इत्यर्थ पु० क० दृधक् दुव दु ख दहतीति दृधक् पु० क० क्षम क्षमास्यास्तीति स पु० क० पापडी डल योरभेदात् पापली पाप लुनातीतिम पु क० इलाट् इलाया पृथिव्यां अटतीति इलाट् पुरा वामनादिरूपेण बले सकाश प्राप्त उक्त च—'बहवो मा न जानन्ति मम मायाविमोहिता । सदाहं द्विजरूपेण विचरामि महीतले ॥' इति भारतवचनात् पु० क० विविमुना रूढ वीनां पक्षिणा विभुगरुडस्तेन ऊढ वाह्यमान इत्यर्थ पु० क० अकलघी अक दु ख लङ्घयतीति अकलघी पु० क० अवलाञ्छन अवगत लाञ्छन यस्य स अवलाञ्छनस्तस्य संबुद्धौ हे अवलाञ्छन ! अवा ध्योरुपसर्गयोरकारलोप पु० क० वडी बवयो डलयोश्च साव र्ण्यात् बली बलमस्यास्तीति स पु० क० खानाम्बुदालीरुचि ख आकाशे अजन्ति गच्छन्ति ते खाना गगनचरा त च ते अम्बु दाश्च तेषामालि पङ्क्तिस्तस्या रुचिरिव रुचिर्यस्यासौ घनश्याम इत्यर्थ पु० क० मद्बाणाकरखण्डन मन्मथबाणनारदयस्तेषामाशा वाञ्छा तस्या आकर समूह तं खण्डयतीति स महेच्छासमूहना शन इत्यर्थ पु० क० क्षीरावस क्षारे क्षीरसमुद्रे आसमन्ताद्वा वन वसतीति तस्य संबुद्धौ हे क्षीरावस हे अतुल्य नास्ति तुल्यो यस्य स तस्य संबोधने कीदृ । माम् ? साधुम् असत्र प्राणासौ सह वर्तमानम् पु० क० अन्तितभिमाङ्गवसन अङ्ग च वसन च अङ्गवसने अन्तिश्च तडिच्च अन्तितडितौ तयोर्निभेव निभा ययोस्ते अन्तितडिन्निभे अङ्गवसने यस्यासौ अन्तितडिन्निभाङ्गवसन पु० क० मारवान् मारो बलमस्यास्तीति स पाटनसमर्थ इत्यर्थ

न्मुद्गालीरुचि । मद्गाशाकरखण्डनो विनिमुना क्षीरावसातुल्य मा सासू हालितडिनिमाङ्गवसनोऽव्या सेरक सारवान् ॥ ९१ ॥ खोटीच्छाशिपलेहपापडवडीर्थ्यारोडमाजी गणो यद्भक्तोऽनिमिषीर वा कुलचणा ध्यायन्ति या योगिन । कालामीलकरालभूखलमहादेत्येन्द्रमाथार्थिनी सा सासूरमा तवाघतटये स्वात्कर्ममोटी चिरम् ॥ ९२ ॥ सुंदाराः उल्पाडिमेखलतटी कच्छोटजा बिभ्रती पूता रेमरडीननीलजसमा नागीव पातालगा । साधोऽसामज फालियारिहरिणव्याधे समं पीडितामामोघोघरवाघनारण पद मन्दाकिनी व क्रियात् ॥ ९३ ॥ जायते नव सौ तथापि च नव म्यापिमिरम्यसा सगमे पट्सरयानि षडेव सुष्यथ शसि त्रीण्येव तद्वजति । चत्वार्यन्यवच मु यस्य विबुधा शैब्दस्य रूपाणि तज्जानन्ते यदि शक्तिरस्ति गदितु पाण्मासिकोऽत्रावधि ॥ ९४ ॥ मुद्गीदालिसुशालितूअरतणीगात्र सुदुग्ध घृत नीकाद्गहपलेहपापडवडी कोरीवघारीमडा । मूला कोठकुठीवडा च कपिटाटीटीदुराचीमडा आदासूरणरायता हादिवडा पुनंन्तु वो मङ्गलम् ॥ ९५ ॥ यौश्वारेद्घ्वज घग्घृतोड्डुधिपति पुभिङ्गजानिर्गणेन्द्रोराडारुडर सरेडुरतरमैवेयस्भाडरम् । उड्डीडुडुनरकास्थिघृक्त्रिदगिभेडार्दाजिनाच्छच्छनि स सादस्तुमदम्बुदालिगलरुग्देवो मुदे वो मृड ॥ ९६ ॥

---

## क्रियागुप्तादयः

### क्रियागुप्तम्

आगता पाण्डवा सर्वे दुर्योधनसमीहया । तस्मै गा च सुवर्णं च रत्नानि विविधानि च ॥ १ ॥ निरुद्यमानवधाङ्गयाचकान्दु ससचयान् । अत्र क्रियापद गुप्त यो जानाति स पण्डित ॥२॥ प्रात प्रात समुत्थाय द्वौ मुनी च कमण्डलू । अत्र क्रियापद वक्तुमवधिर्ब्रह्मणो वय ॥ ३ ॥ ललाटतिल कोपेत कृष्ण कमललोचन । गोकुलेऽत्र क्रिया वक्तु मर्यादा दशवार्षिकी ॥ ४ ॥ पम्पासरसि रामेण सस्नेह सविलासया । सीतया किं कृत सार्धमत्रोत्तरमीक्ष्यताम् ॥ ५ ॥ राजन्नघनश्याम निस्त्रिंशाकर्ष दुर्जय । आकल्प वसुधामेता विद्विषो व रणे बहून् ॥ ६ ॥ कान्तया कान्तसयोगे किमकारि नवोढया । अत्रापि चोत्तरं वक्तुमवधिर्ब्रह्मणो वय ॥ ७ ॥ दामोदराय पुण्यात्म पुष्पमूलफलान्यपि । अत्र क्रियापद गुप्त यो जानाति स पण्डित ॥ ८ ॥ विराटनगरे राजन्की चरादुपरीचकम् । अत्र क्रियापद गुप्त यो जानाति स पण्डित ॥ ९ ॥ कान्त विना नदीतीरे मदमालोक्य केकिनी । अत्र क्रियापद गुप्त यो जानाति स पण्डित ॥ १० ॥ अम्लानपङ्कजा माला कण्ठे रामस्य सीतया । सुधा बुधा

---

१ सा कर्ममोटी चामुण्डा तवाघतटये भवहरणाय स्वात् भवतु कथभूता सा ? सासूरमा असूया वो भस्तस्य रम तेन सह वर्तमाना कथभूता सा ? काला कृष्णवर्णा भीला भीषणा तेभ्योऽपि कराला, अतिरौद्रा इत्यर्थ भुवि खला भूखला दुर्जना, ते च ते महादैत्याश्च तेषां माथो मथन तमर्थयतीति एवंविधा तथा या कुलचणा कुलव्याना योगिन ध्यायन्ति तथा यद्भक्तो गण यस्या सेवको गण यत्प्रसादेनानिमिषीव देवराज इव 'वर्तते' इति वाक्यशेष तामेव विशिनष्टि—खे विचरन्तीति खाटी इच्छया अश्नातीति इच्छाशी पले आमिषे इहा स्पृहा अस्येति पलेह तथा इल्योरैक्यात् पाप दुनातीति पापद- बवयोरैक्यात् बलमस्यास्तीति बली तथा ईर्ष्यया रोल लोल भजते इति भ चासौ स च इति कर्मधारय- २ उल्पानि हरिततृणानि तेषामाली पङ्क्ति सैव मेखला काञ्ची यस्यास्ताद्विधा तटी भुवुर्येस्या सा तथा कच्छे जलप्राये देशे उटजानि पर्णकुटी बिभ्रती बिभ्राणा तथा पूता पावना तथा रेम शब्द त राति अङ्गीकरोतीति रेभरा सशब्दा मुखरा इत्यर्थ- तथा लीनानां एका नगनानां नीरजानां पङ्क्तिसानाम् हमचक्र वाककलहंसादीनामित्यर्थः सभा परिषद् सभा यस्या सा तथा लोप अम्बरादय नागीव पातालगा, भोगवती इत्यर्थ तथा च महा कान्त्यारि हरिणव्याधो बद्ध ने मम सदैव सुगतदिन्यर्थं पीडिताबगाद्विवेचय तथा मा मं यव इति मा तद्विरहा, इयता शून्या इत्यर्थ अमोघो नेतृणां मोक्षप्रद ओघरव सोडोऽभिनिर्वेशा मा तथा एवगुणविशिष्टा मन्दाकिनी एनारा भवता उद्धारा वो युष्माक इति शेष- अथ रणाद भवतारास पदं अवस्थिति क्रियात् करोतु पदा,—वो युष्मान् भयतारणाद भवतारणमनर्थनिवृत्ते- २ नरकतु कृद्रसेत्यर्थ- १ वायु भवति तेषां इह स्वामी नकर स भणो यस्य त कामं दहतीति कन्दारेतमवक्तृ भूत उद्दूनां नक्षत्राणां स्थिरायैर कुवृष्णा भवति टोपनीद् दिनान्दहन्ता मासा एवंवी

मा भाषा यस्य स कुभङ्गजवाभि गणानां प्रमथानामीड गवां राजा नन्दी यस्यासावितीति भावद्धू उग्रा सप्ति ते भुजंगास्तन्नीदृश दशा स्वरं मैवेयकं कण्ठभूषा तेन भयहता भ्रान्त तथा उद्दूनरकत्व इह यस्य स- नरकाणामिति विनष्ट इमानां हस्तिनमिद्द स्त्रादोजिन तेनाच्छन्न इति देवम स शूलन्दर य सुदेखात् भवदिति 'मनु सुधि इत्यत्र रोदो ईदृम् अम्बु विद्वे तेषां च अम्बुदानां दण्डला अम्बुदा मेघस्तेषामालिर्माला तेन तत्कण्ठीर्षस्य रुचा-

(१) य बनमसीहया धनेच्छया आगतास्तस्मै सर्वे पाण्डवा गा च सुवर्णं च निविधानि रत्नानि च 'अदु ददति स्म (२) निरुद्यमा याचका योगहीनानपि याचकान् अत्र दुःखसंचयान् पराण्डय (३) 'प्रात' इति क्रिया प्रा पूरणे लङ् प्रथमपुरुषद्विवचनम् (४) 'ललाट' इति लट् बाल्ये लिट् (५) 'सत्रे' इति षचा जीवे कर्मणि लिट् (६) 'अत्र' इति अत्र रक्षणे 'व' इति व दोलायमने लोट् (७) 'अपारि' इति अपृङ् लज्जायाम् कर्मणि लुङ् (८) ह दामो दर पुष्पमूलफलानि 'भाव' आनय इति भक्ती इत्यत्र प्रविष्टस्य ईवा नागरपुरस्य लो ? रूढिमत्त्वम् अन्योन्यमभिव्याहारेण आनयनार्थ कत्वम् (९) वि पक्षी कीचकाख्यो कीचकान्तरे 'अट' बभ्राम (१०) केकिनी मयूरी इत्येव मेरुजीति विभुर्निति मावद् आलोक्य विनानदीति' विद्वेषेण पुन पुनर्वा शब्द करोतीत्यर्थ-

भ्रमस्तत्र प्रत्यक्षेऽपि क्रियापदे ॥ ११ ॥ नारसिंहाकृति वीक्ष्य वने मत्तमतंगज । अत्र क्रियापद गुप्त यो जानाति स पण्डित ॥ १२ ॥ सध्यावन्दनवेलाया तडागान्ते द्विजोत्तम । अत्र क्रियापद गुप्त यो जानाति स पण्डित ॥ १३ ॥ पुस्कोकिलकुलस्तैते निता तमधुरारवे । महकारद्रुमा रम्या वसन्ते कामपि श्रियम् ॥ १४ ॥ बिम्बाकार सुधाधार कान्तावदनपङ्कजम् । अत्र क्रियापद गुप्त मर्यादा दशवार्षिकी ॥ १५ ॥ राघवस्य शरैर्घोरैर्घोररावणमाहवे । अत्र क्रियापद गुप्त मर्यादा दशवार्षिकी ॥ १६ ॥ ग्रामारागाभिभूतस्य श्लेष्मव्याधिनिपीडित । यदि ते जीवितेच्छा तदा भो शीतल जलम् ॥ १७ ॥

## कर्तृगुप्तम्

गौरीनम्रस्मादरयश्रद्धया शशिन दधौ । इहैव गोप्यते कर्ता वर्षेणापि न लभ्यते ॥ १८ ॥ अन्नवस्त्रसुवर्णानि रत्नानि विविधानि च । ब्राह्मणेभ्यो नदीतीरे ददाति व्रज सत्वरम् ॥ १९ ॥ राक्षसेभ्य सुता हृत्वा जनकस्य पुरी ययौ । अत्र कर्तृपद गुप्त मर्यादा दशवार्षिकी ॥ २० ॥ श्यामौ तत्र स्तनावेतौ पिबन्ति सतत मुदा । अत्र कर्तृपद गुप्त मर्यादा दशवार्षिकी ॥ २१ ॥ व्ययग्रासा पञ्चशिरा यस्यैर्नारिभूषण । असिरोमा क्रियादुर्ग शङ्कलायनवीक्षण ॥ २२ ॥ व्यामोह तव भिन्दन्तु छिन्दन्तु दुरितानि च । कर्तृगुप्तमिम श्लोक ये जानन्ति विचक्षणा ॥ २३ ॥ न करोति नाम रोष न वदति परुष न हन्त्यय शत्रून् । रञ्जयति महीमखिला तथापि धीरस्य वीरस्य ॥ २४ ॥ शरदिन्दुकुन्दधवल नगपतिनिलय मनोहर देवम् । ये सुकृत कृतमनिश तेषामेव प्रसादयति ॥ २५ ॥

## कर्मगुप्तम्

शीकरासारसवाहिसरोजवनमारुत । प्रक्षोभयति पान्थ सीनि श्वासैरिव मासल ॥ २६ ॥ सुभग तवाननपङ्कजदर्शनसजातनिर्भरप्रीते । शमयति कुर्वन्दिवस पुण्यवत कस्य रमणीय ॥ २७ ॥ एहि हे रमणि पश्य कौतुकं धूलिधूसरतनु दिगम्बरम् । सापि तद्वदनपङ्कज पपौ भ्रात रुक्तमपि किं न बुध्यते ॥ २८ ॥

## करणगुप्तम्

पृतिपङ्कमयेत्यर्थं कासारे दु खिता अमी । दुर्वारा मानस हसा गमिष्यन्ति घनागमे ॥ २९ ॥ अह महानसायात कल्पितो नरकस्तव । मया मासादिक भुक्त भीम जानीहि मा वक ॥ ३० ॥

## सप्रदानगुप्तम्

अम्भोरुहमये स्नाता वापीपयसि कामिनी । ददाति भक्तिसपन्ना पुत्रसौभाग्यकाम्यया ॥ ३१ ॥ प्रशस्त्यायुक्तमार्गस्य तव समानिता श्रिता । स्पृहयन्ति न के नाम गुणरत्नालय प्रभो ॥ ३२ ॥

## अपादानगुप्तम्

शिलीमुखैस्त्वया वीर दुर्वारैर्निर्जितो रिपु । निर्भेत्य लतमन्निो वनेऽपि कुसुमाकुले ॥ ३३ ॥ सरसीतोयमुद्धृत्य जन कन्दर्पकारकम् ॥ पिबत्यम्भोजसुरभि स्वच्छ मेकान्तशीतलम् ॥ ३४ ॥

## सबन्धगुप्तम्

तूणेव मधुमासेऽस्मि सहकारद्रुमञ्जरी । इयमुच्चिद्रमुकुले भाति न्यस्तशिलीमुखा ॥ ३५ ॥ भानुर्न जायते लक्ष्म्या सरस्वत्याथवा मता । अत्र षष्ठीपद गुप्त मर्यादा दशवार्षिकी ॥ ३६ ॥ प्रासमदो मधुमास प्रबला रुचिप्रियतमोऽपि दूरस्थ । असती सनिहितेय सहतशीला सखी नियतम् ॥ ३७ ॥

## अधिकरणगुप्तम्

या कटाक्षच्छटापाते पवित्रयति मानसम् । एकान्ते रोपितप्रीतिरस्ति सा कमलालया ॥ ३८ ॥ विषयमान्तता सिद्धा सवत्स्येन निरूष्मण । यथाव भस्म पद्मा च निर्वाण हन्त्यय जन ॥ ३९ ॥

---

(११) प्रत्यक्षेपि' क्षिप्ता (१२) गज सिंहस्याकृति वीक्ष्य 'नार' न जगाम ऋ गतौ कर्तरि लिट् (१३) हे द्विजोत्तम 'ऐ' आगच्छ (१४) 'मधु' दधति स (१५) पूर्वोक्त कान्तावदन 'दश' चुम्बस्वेति (१६) हे राघव' त्व रावण आहवे शरै कृत्वा 'स्य' मारय इति (१७) भो श्लेष्म व्याधिनिपीडित' यदि जीवितस्येच्छा तर्हि शीतल जल 'मा पा' मा पिबेति (१८) ई कामस्त हन्तीति 'ईन' ईश्वर इति (१९) हे ब्राह्मण! 'इभ्य' समृद्ध (२०) राक्षसाना इभ्य स्वामी रावण जनकस्य सुता सीता हृत्वा पुरी लङ्का ययौ (२१) श्यामौ तत्र कृष्णमाताग (२२) उ' महादेव (२३) उ, शिव ई ब्रह्मा अ विष्णु इत्यनेन क्रम इति ज्ञातम् तस्य बहुवचने 'ऊया' हरविरिञ्चहरय तव मोह भिन्दन्तु दुरितानि छिन्दन्तु ये कर्तृगुप्त विचक्षणा (२४) अय पुरुषा रोष न करोति परुष कठोर न वदति शत्रून हन्ति नामेति प्रसिद्धम् तथापि अस्य वीरस्य 'धी' अखिला मही रञ्जयति (२५) येरनिश सुकृत कृत तेषामेव 'मन' शरदि कुन्दधवल नगपतिनिलय देव हर प्रसादयति

(२६) पान्थस्त्रीनि श्वासैर्मासल पुष्ट इवेत्युत्प्रेक्षा शीकरासारसवाहिनवन मारुतो वेगवान्वायु 'स प्रक्षोभयति (२७) दिवस 'श' सुख कुर्वन् नयति गच्छति (२८) हे रमणि' एहि को पृथिव्यां तुकं बालक धूलिधूसरतनु दिगम्बर पश्य (२९) दुष्ट वा जल दुर्वा, तेन दुर्वारि' कलुषितजलेन (३०) महश्च नत् अन शकट च महान तेन महानसा' महता शकटेन आयात आगत नरको मृत्यु (३१) अम्भोरुहमये इत्यत्र 'अये' ई काम लक्ष्मी (३२) प्रशस्त्या युक्तमार्गस्य इत्यत्र 'प्रशस्त्यै' कल्याणाय उक्तमार्गस्य (३३) 'अलिन' भ्रमरात् (३४) 'सरसीत' सरोवरात्, ध जन्म् (३५) उच्चिद्रमुकुले 'ए' इति भिन्ने पदे विशेषे ई कामस्य ए (३६) भा कान्ति 'नु' नरस्य (३७) 'मास' चन्द्रस्य अदो मधु मद्य प्राप्तम् (३८) ए कृष्णे 'का ते' मनसि (३९) विषयमानतता इत्यत्र 'विषदि' कष्टे सिद्धा ऊष्मा द्रव्यरूपो यस्मात्तस्य निरूष्मण अमानता आदराभाव, शान्तमूष्मरहितमित्यर्थ-

### अक्षरच्युतकम्

महानपि सुधीरोऽपि बहुरत्नयुतोऽपि सन्। विरम कुपरी वारो नदीन केन सेव्यते॥७॥ सुशील स्वर्णगौराङ्ग पूर्णचन्द्र निभानन। सुगत कस्य न प्रीतिं तनोति हृदि संस्थित ॥८॥

### स्थानच्युतकम्

तनोतु ते यस्य फणी गरुत्मान् पाणौ मुरारिर्दयिता च शय्या। नाभौ स्फुरन्मद्ममधुप्रदेश पद्मा गतिश्चक्रमसौ विधाता ॥ ९ ॥ हर क्षयी तापकर सुदेश शातो हरिर्गोत्ररिपुर्विवस्वान्। चन्द्रो द्विजिह्वाश्रित इत्युपेक्ष्य लक्ष्म्या वृत पातु विधिर्जगति ॥ १० ॥

### व्यञ्जनच्युतकम्

भिक्षवो रुचिरा सर्वे रसा सर्वजनप्रिया। क्षमायामभिसपना दृश्यन्ते मगधे परम् ॥११॥ सत्याशीलदयोपेतो दाता सुचिरमत्मर। जिन सर्वात्मना सेव्य पदमुच्चैरभीप्सता॥१२॥

### च्युतदत्ताक्षरम्

सदागतिद्वयोच्छ्रायस्तमसो वश्यता गत। अस्तमेष्यति दीपोऽय विधुरेक शिवे स्थित ॥ १३ ॥ पूर्णचन्द्रमुखी रम्या कामिनी निर्मलाम्बरा। तनोति कस्य न स्वान्तमेकान्त मदनातुरम् ॥ १४ ॥ कूजन्ति कोकिला साले यौवने फुल्लमम्बुजम्। किं करोतु कुरङ्गाक्षी वदनेन निपीडिता ॥ १५ ॥

---

## अन्तरालापाः

कस्तूरी जायते कस्मात्को हन्ति करिणा कुलम्। किं कुर्यात्कातरो युद्धे मृगात्सिंह पलायनम् ॥ १ ॥ क खे चरति का रम्या का जप्या किं विभूषणम्। को वन्द्य कीदृशी लङ्का वीरमर्कटकम्पिता ॥ २ ॥ सीमन्तिनीषु का शान्ता राजा कोऽभूद्गुणोत्तम। विद्वद्भि का सदा वन्द्या अत्रैवोक्त न बुध्यते ॥ ३ ॥ युधिष्ठिर कस्य पुत्रो गङ्गा वहति कीदृशी। हसस्य शोभा का वास्ति धर्मस्य त्वरिता गति ॥ ४ ॥ भोजनान्ते च किं पेय जयन्त कस्य वै सुत। कथ विष्णुपद प्रोक्त तक्र शक्रस्य दुर्लभम् ॥ ५ ॥ पृथ्वी सबोधन कीदृक्कविना परिकीर्तितम्। केनेद मोहित विश्व प्राय केनाप्यते यश ॥ ६ ॥ क कुर्याद्भुवन सर्वे क समुन्मूलयेद्बुमान्। किं प्रतीके भवेन्मुरय क परत्रैति पुण्यताम् ॥ ७ ॥ भरत इवातिस्वच्छ कस्याम्यन्तरमगाधमतिशिशिरम्। काव्यामृतरसममस्त्वमिव सदा क कथय सरस ॥८॥ वीरे सरुषि रिपूणा नियत का हृदयशायिनी भवति। नमसि प्रस्थितजलदे का राजति हन्त वद तारा ॥ ९ ॥ भ्रमरहित कीदृक्षो भवतितरा विकसित पद्म। ज्यौतिषिक कीदृक्ष प्रायो भुवि पूज्यते लोके ॥ १० ॥ प्रभव को गङ्गाया नगपतिरतिसुभगशृङ्गधर। के सेव्यन्ते सेवकसार्थैरत्यर्थमर्थरतै ॥ ११ ॥ अयमुदितो हिमरश्मिर्वनितावदनस्य कीदृश सदृश। नीलादिकोपलम्भ स्फुरति प्रत्यक्षत कस्य ॥ १२ ॥ गैरिकमन शिलादि प्रायेणोत्पद्यते कुतो नगत। य खलु न चलति पुरुष स्थानादुक्त स कीदृक्ष ॥ १३ ॥ कस्य मैरौ दुरधिगम कमले क कथय विरचितावास। कैस्तुष्यति चामुण्डा रिपवस्ते वद कुतो भ्रष्टा ॥ १४ ॥ क संजघान कृष्ण का शीतलवाहिनी गङ्गा। के दारपोषणरता क बलवन्त न बाधते शीतम् ॥१५॥ क कौ के क कौ कान् हसति

---

(७) एकस्मिन्नर्थे नदीना इन स्वामी 'नदीन' समुद्र द्वितीयेऽर्थे नदीन इत्यस्मात् नकार सस्वरो लुप्यते तदा 'दीन' इति निष्पत्ति दीनशब्देन कृपणधनी पुमान् (८) एकस्मिन्नर्थे 'सुगतो' बुद्ध जिन द्वितीयेऽर्थे सुगत इत्यस्मात् गकार सस्वरो लुप्यते तदा 'सुत' इति स्यात् पुत्र पुत्र (९,१०) एतयो श्लोकयो मध्ये अर्थद्योतनिकाया कृताया सत्या योजनिका स्थानान्तरे धृताऽस्ति यो यस्य शब्दस्य अन्वयत्वेन लगति स शब्दस्तत्पार्श्वे धृतो नास्ति (११) एकस्मिन्नर्थे 'भिक्षव' श्वेताम्बरा द्वितीयेऽर्थे भिक्षव इति पदात् भकारलोप क्रियते तदा 'इक्षव' गुन्द्रवृक्षा (१२) एकस्मिन्नर्थे 'जिनो' वीतराग द्वितीयेऽर्थे जिन इत्यस्माज्जकारो लुप्यते तदा 'इन' इति स्थितम् इन स्वामी राजा वा (१३) एकस्मिन्नर्थे 'दीप' द्वितीयेऽर्थे दीप इत्यत्र पकारं दूरीकृत्य तत्स्थाने नकारो दीयते तदा दीन' इति अय दीनो विधुश्चन्द्र एक एव शिवे स्थित (१४) एकस्मिन्नर्थे 'कामिनी' स्त्री द्वितीयेऽर्थे 'यामिनी' रात्रि (१५) अत्र 'रसाले' इति वक्तव्ये 'साले' इति रच्युत 'वने' इत्यत्र 'यौवने' इति यौदत्त वदनेन' इत्यत्र मदनेन' इति मच्युतो वो दत्त

(१) कस्तूरी कस्मात् जायते? मृगात् करिणा कुल को हन्ति? सिंह' कातरो युद्धे किं कुर्यात्? पलायनम्—इति योजना

(२) खे क चरति? वि पक्षी रम्या—रमा जप्या? ऋक् विभूषणम्—कटकम् वन्द्य—पिता लङ्का—वीरमर्कटैर्हनूमदादिभि कम्पिता नाशितेत्यर्थ (३) चरणाद्यन्ताक्षरयोर्मेलनेनोत्तरम् यथा सीता राम विद्या (४,५) चतुर्थपादस्यपदत्रयेण प्रश्नत्रयस्योत्तरम् (६) 'कविना' हे को हे पृथ्वि' इना कामेन कविना काव्यकर्त्रा (७,८) 'सरस' तडागस्य रसेन शृङ्गारादिना सह वर्तमान (९) 'तारा' आरा चर्मप्रभेदिनी शत्रूणा भाति दुरुरूपा तारा नक्षत्रम् (१०) 'भ्रमरहित' भ्रमराणा भृङ्गाणां हितो हितकृत् भ्रमेण मिथ्यामत्या रहित शुद्धज्ञानवान् (११) 'प्रभव' उत्पत्तिस्थानम् महान्त ईश्वरा (१२) 'सदृश' समान इव दृश्यतेऽसौ तुल्य इत्यर्थ दृशा नेत्रेण सह वर्तमान सदृक् तस्य सनेत्रस्य मनुष्यस्य (१३) 'नगत' नगात्पर्वतात् न गत स न जगामेत्यर्थ (१४) 'कस्य' क जल तस्य 'क' मस्तके 'कै' मस्तकै 'कुत' पृथ्व्या समाज्ञाद् पृथ्व्याधिकारात्पतिता इत्यर्थ (१५) कृष्ण क संजघान? कमम् शीतलवाहिनी गङ्गा का? काशी दारपोषणरता के? केदारपोषणरता शीत बलवन्त क न बाधते? कम्बलवन्तम्—इति योजना

---

१ कर्तृकर्मक्रियापदानां स्थानान्तरे धृतत्वात् अन्वयो दुर्लभो यस्य वृत्तस्य तद् स्थानच्युतकम्। २ 'रसोऽपि वाक्षरं किंचित् पुनर्यत्र भवेत्। यत्रान्तरो भवेदर्थश्च्युतदत्ताक्षरं हि तत्॥' इति

१ मस्तके

घ हसतो हसन्ति हरिणाक्ष्या । अधर पञ्चमञ्ची हसी चन्दस कोरकादन्ता ॥ १६ ॥ का शम्भुकान्ता किमु कुन्दकान्त कान्तामुख किं कुरुते भुजग । क श्रीपति का विषमा समस्या गौरीमुख चुम्बति वासुदेव ॥ १७ ॥ का लोकमाता किमु देहमुख्य रते किमादौ कुरुते मनुष्य । को दैत्यहन्ता वद वै क्रमेण गौरीमुख चुम्बति वासुदेव ॥ १८ ॥ का शैलपुत्री किमु नेत्रगम्य शुकार्भक किं कुरुते फलानि । मोक्षस्य दाता स्मरणेन को वा गौरीमुख चुम्बति वासुदेव ॥ १९ ॥ के भूषयन्ति स्तनमण्डलानि कीदृक्सुमा चन्द्रमस युत श्री । किमाह सीता दशकण्ठ नीता हारामहादेवरतातमात ॥ २० ॥ खे के किं समरस्य सारं कृपेर्भय किं किमुशन्ति भृङ्गा । महादय विष्णुपद च केषा भागीरथीतीरसमाश्रितानाम् ॥ २१ ॥ मजन्ति पद्मानि कदा विकास प्रिया गते भर्तरि किं करोति । रात्रौ च नित्य विरहाकुला का सूर्योदये रोदिति चक्रवाकी ॥ २२ ॥ सन्तश्च लुब्धाश्च महर्षिसघा विप्रा कृपिस्था खलु माननीया । किं किं समिच्छति तथैव सर्वे नेच्छन्ति किं माधवदाघयानम् ॥ २३ ॥ का पाण्डुपत्नी गृहभूषण किं को रामशत्रु किमगस्त्यजन्म । क सूर्यपुत्रो विपरीतपृच्छा कुन्तीसुतो रावणकुम्भकर्णौ ॥ २४ ॥ करोति शोभामलके स्त्रिया को दृश्या न कान्ता विधिना च कोक्ता । अङ्के तु कस्मिन्दहन पुरारे सिन्दूरबिन्दुर्विधवाललाटे ॥ २५ ॥ किं भूषण सुन्दरसुन्दरीणा किं दूषण पाञ्चजनस्य नित्यम् । कस्मिन्विधात्रा लिखित जनाना सिन्दूरबिन्दुर्विधवाललाटे ॥ २६ ॥ कीदृक्षा गिरिशनन्दनये च धातुर्निष्ठौ का विबुधजरातमस्तृतीया । मध्यार्णे सति कथमालकोऽसि देश सौभाग्य सकलकला जयातगाहा ॥ २७ ॥ विवाहे पुरस्त्रीजनैर्लिप्यते का न के मानभावान्ति गर्भोगता का । घने वारिधौ रामत कम्पते का दरिद्रा दरिद्रा सरिद्रावणश्री ॥ २८ ॥ कस्मिन्वसति वद मीनगणा विकल्प किं वापद वदति किं कुरुते विरम्भान् । विद्युल्लतावलयवान्पथिकाङ्गनानामुद्वेजको भवति क खलु वारिवाह ॥ २९ ॥ शब्द प्रभूगत इति प्रचुराभिधायी कीदृग्भवेद्वदत शब्दविदो विचिन्त्य । कीदृग्बृहस्पतिमते विहिताभियोग प्राय पुमान्भवति नास्तिकवर्गमध्य ॥३०॥ क प्रार्थ्यते मदनविह्वलया युवत्या भाति क पुण्ड्रकमुपैति कथ यतासु । कानादरो भवति केन च रज्यतेऽज्ज वाच्यास्ति किं फलमुदाहर नालिकेरम् ॥ ३१ ॥ क वसति लघु जन्तु किं तिमान हि वान्तेर्लटिति वद पशु क लम्बकण्ठ वदन्ति । प्रमरसमयदुग्ध वेत्ति या कामिनीना तिलतुषपुटकोणे मक्षिकोष्ट्र प्रसूता ॥ ३२ ॥ को निर्दग्ध-त्रिपुररिपुणा कश्च वर्णस्य हन्ता नद्या कूल विघटयति क क परसीरतश्च । क सनद्धो भवति समरे भूषण किं कुचाना किं दु सहाद्भवति महता मानपूजापहार ॥ ३३ ॥ क कान्तारमगात्पितुर्वचनत सश्लिष्य कण्ठस्थली कामी किं कुरुते च गृध्रहठतश्छिन्न प्ररूढ च किम् । का रक्ष कुलकालरात्रिगमनचन्द्रातप द्वेष्टि को रामश्चुम्बति रावणस्य वदन सीतावियोगातुर ॥ ३४ ॥ कीदृक्प्रचमतगज कमभिनत्पादेन नन्दात्मज शब्द कुत्र हि जायते युवतय कस्मिन्सति व्याकुला । विक्रेतु दधि गोकुलात्प्रचलिता कृष्णेन मार्गे धृता गोपी काचन त किमाह करुण दानी अनोखे भये ॥ ३५ ॥ किं कुर्वन्त्युरगि द्विजा प्रतिदिन के माननीया प्रभो का वा साहसिकी निशासु यतत यौ कीदृशी वर्तते । कुत्रास्ते मधु नारिकेरजफले के सान्ति पाशाराम सध्यावन्दनमाचरन्ति विबुधा नारीभगान्तर्गते ॥ ३६ ॥ लङ्काभूपनिशाचरो रघुपति युद्धे कथ दृष्टवान् दीन पाति पितेव य पशुपति कस्तस्य वाह प्रिय । केना पूर्णफल नरै सुकृतिभि वक्षःस्थले धुन्यते जारा ये भुवि तान्प्रशास्ति कतमो मेघाभिहैवोत्तरम् ॥ ३७ ॥

(१६) हरिणाक्ष्या क कं हसति ? अधर पल्लवम् को को हसन ? भृङ्गी हंसी के कान् हसति ? दन्ता कुन्दस्य कोरकान् (१७,१८,१९) गौरी मुखम् चुम्बति वासुदेव गौरीमुखं चुम्बति वासुदेव- [illegible] (२०) हारा महादेवरता [illegible] हा राम हा देवर, हा तात, हा मातः- (२१) [illegible] [illegible] आश्रितानाम् भागीरथीतीरसमाश्रितानाम् (२२) सूर्यो दये रोदिति चक्रवाकी [illegible] (२४ २५, २६) [illegible] (२७) [illegible] (२८) [illegible]

(२९) 'वारिवाह'- वारि जले वा विकल्पार्थे [illegible] वाहो मेघः- ३० नास्ति [illegible] (३१) 'नालिकेरम्' [illegible] नालिकेरम् (३२) [illegible] (३३) [illegible] (३४) [illegible] (३५) [illegible] (३६) [illegible] (३७) [illegible]

जने। शमोरावरण कि क भजन्ते व्याधयो जनम् ॥ ३३ ॥ कस्मिन्स्वपिति क्संसारि का वृत्तिरधमा नृणाम्। किं नूते पितर बाल किं दृष्ट्वा रमते मन ॥३४॥ किमिच्छति नर काश्या भूपाना को रणे हित । को वन्द्य सर्वदेवाना दीयतामेकमुत्तरम् ॥ ३५ ॥ भागीरथी कथभूता कामिनी प्राह किं प्रियम्। एकमेवोत्तर देहि शास्त्रलौकिकभाषया ॥३६॥ बुध कीदृग्वचो नूते को रोगी कश्च नास्तिक । कीदृक्चन्द्र नमस्यन्ति किं सूत्र पाणिनेर्वद ॥३७॥ राज्ञ सबोधन कि स्यात्सु ग्रीष्मे तु का प्रिया। अधनास्तु किमिच्छति आर्तै कि क्रियते वद ॥ ३८ ॥ किमस्ति यमुनानद्या जारार्न्कि वक्ति जारिणी। औ-प्रगीर्वाणभाषाभ्यामेकमेवोत्तर वद ॥ ३९ ॥ का कान्ता कालियाराते पुनरर्थे किमव्ययम्। कि वन्द्य सर्वदेवाना फलेषु किमु सुन्दरम् ॥ ४० ॥ केदारे कीदृशो मार्गे कुत्र शेते जनार्दन । स्त्रीचित्त कुत्र रमते स्वामी किं वक्ति चेटिकाम् ॥ ४१ ॥ घनसमये शिखिषु स्यान्नृत्य कीदृक्षु कि घनात्पतति। प्रावृषि कस्य न गमन मानसगमनाय कीदृशा हसा ॥ ४२ ॥ चादय इति यत्र स्यादुत्तरमथ तत्र कीदृश प्रश्न । कथय त्वरित के स्युर्नौकाया वाहनो पाया ॥ ४३ ॥ वदतानुत्तमवचन ध्वनिरुच्चैरुच्यते स कीदृक्ष । तत्र सुहृदो गुणनिवहे रिपुनिवह कि नु कर्तार ॥ ४४ ॥ को मार्ष्टि मकरन्देस्तनय कमसूत जनकराजसुता। कथय कृषीवल सस्य पक्क किमचीकरस्त्वमपि ॥४५॥ पृच्छति पुरुष केऽस्या समभूवन्व्यञ्जकृत्तपक्षतय । बहुभय देश जिगमिषुरेकाकी वार्यते स कथम् ॥ ४६ ॥ को नयति जगदशेष क्षयमथ विमराबभूव क विष्णु । नीच कुत्र सगर्व पाणिनिसूत्र च कीदृक्षम् ॥ ४७ ॥ कि स्याद्विशेष्यनिष्ठ का सरया वदत पूर्णी भवति । नीच केन सगर्व सूत्र चन्द्रस्य कीदृक्षम् ॥ ४८ ॥ सुकपरिविन्द शब्द सुब्रह्मण्यस्य वाचक केन। स्तनभरनमिता नारी केनोपायेन रञ्जयेत्कान्तम् ॥ ४९ ॥ कीदृग्गृह याम्यगृह गतस्य कास्त्राणमम्भस्तरणे जनानाम्। भूषा कथ कण्ठ न ते नु पृष्टे मुक्ताकलापैरिति चोत्तर किम् ॥ ५० ॥ कीदृग्गन स्यान्न भयाय पृष्टे यदुत्तर तस्य च कीदृशस्य। वाच्य भवेदीगुणजातमम्बु क चाधिशेते गवि कोऽर्चनीय ॥ ५१ ॥ दधौ हरि क शुचि कीदृगन्न पृच्छत्यक किं कुरुते सशोक । श्लोक विधायापि किमित्युदार कविर्न तोष समुपैति भूय ॥ ५२ ॥ लक्ष्मीधर पृच्छति कीदृश स्यान्नृप सपत्नैरपि दुर्निवार । अकारि कि ब्रूहि नरेण सम्यग्पितृत्वमारोपयितु स्वकीयम् ॥ ५३ ॥ कीदृश वद मरुस्थल मत द्वारि कुत्र सति भूषण भवेत्। ब्रूहि कान्त सुभट सकार्मुक कीदृशो भवति कुत्र विद्विषाम् ॥ ५४ ॥ का प्रियेण रहिता वराङ्गना धाम्नि केन तनयेन नन्दिता। कीदृशेन पुरुषेण पक्षिणा बन्धन समभिलष्यते सदा ॥५५॥

(३३) 'अवेलाभोजिनम्' अवे लाभ अजिनम् ओवेलाभोजिनम् (३४) 'शेषेसवावापररूपम्' 'शेषे सेवा वा पररूपम्' (३५) 'मृत्युजय' मृत्युम् जय मृत्युजय (३६) 'मलापहा' मलापहा मला पहा (३७) 'अर्थवदधातुरप्रत्यय प्रातिपदिकम्' अथवत् अधातु अप्रत्यय प्रातिपदिकम् अथवदधातुरप्रत्यय प्रातिपदिकम् (३८) देवताराधनम्' देव तारा धनम् देवताराधनम् (३९) कालिय कालि य (४०) 'मातुलिङ्गम्' मा तु लिङ्गम् मातुलिङ्गम् (४१, ४२) 'समुत्सुकमनस' समुत्सु मुदा हर्षेण सह वर्तमाना समुदस्तेषु क पानीयम् अनस शकटस्य समुत्सुक उत्कण्ठायुक्त मनो येषा ते समुत्सुकमनस (४३) 'केनिपाता' अत्र, के निपाता इति प्रश्न प्रथमवारमेव द्वितीयवार तूत्तरम् निपाता के भवन्तीति प्रश्न चादयो निपातसंज्ञा के पानीये निपतन्ति ते केनिपाता अरित्राणि (४४) 'अवमतार' अवम नीचार्थवाचकम् तार अत्युच्चैर्ध्वनि अवमतार अरिमेमत्राणि रिपूणामपमान करिष्यन्ति इत्यर्थ (४५) 'अलीलवम्' अली भ्रमर, लव लवनामान पुत्रम्, अह अली लवलवमकरवम् (४६) 'मानवनगा' हे मानव! नगा पर्वता इन्द्रेण हि पर्वतानां पक्षच्छेद कृत इति पौराणिकी कथा, मानवन गा हे अनवन! न विद्यते अवन रक्षण यस्य स अनवन तत्संबोधन हे अरक्षित ! त्व मा गा गमन मा कुरु।

(४७) 'यमो गन्धने' यम कृतान्त अग गोवर्धनम् धने यमो गन्धने पाणिनीयव्याकरणमध्ये इद सूत्रमस्ति (४८) 'विशेषणमेकार्थेन विशेषणम् एकादीनां संख्यापूरक एकमेव भवति एकादी अङ्को लिख्यते तदा बिन्दुना साफल्य स्यात् यथा १० एकमेव अर्थेन द्रव्येण विशेषणमेकार्थेन इद चन्द्रव्याकरणसूत्रमस्ति (४९) 'उपरिविहरणेन' आद्ये सुकपरिविन्दशब्दे उ प रि वि इत्येतेषा वर्णाना हरणेन निष्कासनेन स्कन्द इति शब्द सुब्रह्मण्यस्य षडाननस्य वाचको भवति द्वितीये उपरि विहरणेन इत्यस्य विपरीतरतेनेत्यर्थ (५०) 'हाराविनाव' हारावि हा इति खेदे हा इति राव शब्दो विद्यते यस्मिस्तत् नाव नौका हे हारा', वो युष्मान् विना (५१) 'अहिममहिम' अहिमम् न सन्ति हिंस्रा घातुका जीवविशेषा यस्मिंस्तत् अहिम न विद्यते हिमम् अहिम् तस्य अहिम सत कोऽर्थ यदा अहिमशब्दात् हिम् दूरीक्रियते तदा अम इति निष्ठेत् अम नेत्रगत अश्रुपात अहिं शेषनागम् अ कृष्ण पूज्य मनू अधिशेते (५२) 'अगमकमकरोदिति' अग गोवर्धनम् अक न विद्यते क जल यत्र तत् हे अक न विद्यते क सुख यस्य स हे दु खिन्' रोदिति रोदन करोति अग मकमकरोदिति एव श्लोक अगम्य अकरोत् इति विचारयन् तुष्टो न भवति (५३) 'समजनितनय' हे सम मा लक्ष्मीस्तया सह वर्तमान हे लक्ष्मीधर! जनितनय कृतो नयो न्यायो येन स समजनि तनय', तनय पुत्र समजनि उत्पादित- (५४) 'अवारितोरणे'-अवारि न विद्यते वारि जल यस्मिस्तत् तोरणे बहिर्द्वारे सति अवारितो रणे रणे संग्रामे अवारित न वारयितु शक्यते स' (५५) 'शकुन्तलाभरतेन' शकुन्तलानाम्नी कन्ये पुत्री भरतनाम्ना पुत्रेण, नन्दिता इत्यर्थ शकुन्तानां पक्षिणां लाभोऽर्तेन तत्र रत आसक्तस्तेन, व्याधेनेत्यर्थ

१ संस्कृतया महाराष्ट्रभाषया चेत्यर्थ २ तैलंगभाषया संस्कृतया च

फीदृश हृदयहारि कूजित क सत्ता यशसि भूपतेर्मत । कस्त्वास्ति विपिने भयाकुल फीदृशश्च न भवेन्निशाकर ॥ ५६ ॥ कीदृशी निरयभूर्नेकधा सेव्यते परमपापकर्मभि । प्रेतराक्षसपिशाचसेविता कीदृशी च पितृकाननस्थली ॥ ५७ ॥ केसर द्रुमतलेषु सस्थित कीदृशो भवति मत्तकुञ्जर । तत्रत शिरमपेक्ष्य लक्षणैरर्जुन समिति कीदृशो भवेत् ॥ ५८ ॥ निर्जित सकलारातिं पृच्छति को नैको मृत्योर्भयमृच्छति । मेनास्ययकृतरुचिराशाया किं तिमिरक्षयकारि निशाया ॥ ५९ ॥ विहगपति क हृतज्ञानहित कीदृग्भवति पुर जनमहितम् । किं कठिन विदित वद धिमन्याद पतिरपि कीदृग्भयकृत् ॥ ६० ॥ अनुकूलविधायिदैवतो विजयी स्यानु कीदृशो नृप । विरहिण्यपि जानकी वने निवसन्ती मुदमादधौ कुत ॥ ६१ ॥ कुसुम पतदेत्य नाकतो वद कस्मै स्पृहयन्ति भोगिन । अपि गम्य रत वराङ्गना क नु यत्र कुरुते सुशिक्षिता ॥ ६२ ॥ कयो वद कुत्र कीदृशा कठिण किं विदित समन्तत । अधुना तव वैरियोषिता हृदि ताप प्रनलो विहाय का ॥ ६३ ॥ वसति कुत्र सरोरुहसततिर्दिनकृतो ननु के तिमिरच्छिद । पवनभक्षसपत्नरणोत्सुक पुरुषमाह्वय को जगति प्रिय ॥ ६४ ॥ न भवति मलयस्य कीदृशी भू क इह कुच न बिभर्ति क गता थी । भवदरिनिवहेषु कास्ति नित्य बलमथनेन विपक्षघायि केषाम् ॥ ६५ ॥ समयमिह वदति क निशीथ शमयति कान्वद वारिवाहवृन्दम् । वितरति जगता मन सु कीदृग्घुदमतिमात्रमय महातडाग ॥ ६६ ॥ किमकरवमह हरिर्महीध्र मसुनबलेन गवा हित विधित्सु । प्रियतमवदनेन पीयते क परिणतनिम्बफलोपम प्रियाया ॥ ६७ ॥ परिहरति भयात्तवाहित किं कमथ कदापि न विन्दतीह भीत । कथय किमकरोरिमा धरित्री नृपतिगुणैर्नृपते सयं लभेर ॥ ६८ ॥ पृच्छति शिरसिरुहो मधुमथन मधुमथनस्त शिरसिरुह च । क खलु चपलतया मुनि विदित का ननु याननया गति गदिता ॥६९॥ कीदृक्तोय दुस्तर स्यात्तितीर्षो का पूज्यास्मिन्खङ्गमामग्रयस्य । दृष्ट्वा धूम दूरतो मानविना किं कर्तासि प्रातरेवाश्रयाराम् ॥ ७० ॥ कीदृक्प्रातर्दीपवर्ते शिखा स्यादुष्ट्र पृच्छत्याभजते मृगा किम् । देवामाले किं गते प्रायशोऽस्मिँलोके कुर्याच्चो विवाह विविक्त ॥ ७१ ॥ कीदृक्सेना भवति रणे दुर्वारा वीर कस्मै स्पृहयति लक्ष्मीमिच्छन् । का सद्बुद्धिर्भवति भुव समामे किं कुर्वीध्व सुभटजना भ्रातृव्यान् ॥ ७२ ॥ कसाराद्वेद गमन केन स्यात्कमिच्छति सलभते स्वल्पेच्छु । क सर्वेषा शुभकरभूर्धीर किं कुर्यास्त्व सुजन सशोक लोकम् ॥ ७३ ॥ कीदृक्ष सकलजनो भवेत्सुराज्ञ क कालो विदित इहान्धकारहेतु । क प्रियान्तुमुदवनस्य को निहन्ति भ्रातृव्य वद शिरसा जितस्त्वया क ॥ ७४ ॥ समामे स्फुरदसिना हतास्त्वया के दु ख के बत निरये नरस्य कुर्यु । कस्मिन्नुद्भवति कदापि नैव लोम शाता के जगति महाल्पपुण्यभाज ॥ ७५ ॥ फीदृश

(५६) 'कलकविरहित' कल मधुर शब्द कवि काव्यादिश्च अहित शत्रु कलङ्केन मृगरूपाभिज्ञानेन विरहित न स्यात् इति भावार्थ (५७) 'नरकपालरचिता' नरकाणां पाला नारकजीवरक्षका यमभटास्तै रचिता वरराङ्गना नराणां कपालानि कर्पराणि तै कृत्वा रचिता श्मशानभूमिस्तु मनुष्याणां मुण्डै सहिता भवति (५८) 'दानवकुलभ्रमरहित' दानेन मदेन बकुलानां वृक्षाणां भ्रमरेभ्य सकाशात् हित हितकृत्वादित्यर्थ दानवानां दैत्यानां कुले यो भ्रमो दानवा भवी कुर्युरिति मिथ्याज्ञान तेन रहित (५९) 'विधुतारातेज' 'हे विधुताराते' विधुता कम्पिता अराय शत्रवो येन स तत्सबोधनम् अथ मह्मा विधुश्चन्द्र तारा नक्षत्राणि तासां तेज प्रकाश (६०) 'अहिमकरमय' अहि सर्पम् मकरे नास्ति करो राजदण्डो यस्मिंस्तत् भय स्यात् अहप सदा मकरा मत्स्यविशेषा [illegible] (६१) 'कुशलवधित' कुशले [illegible] [illegible] कुसुम [illegible] (६२) 'सुरतवे' सुरतवे [illegible] सुरतरु संबोधन [illegible] (६३) 'गिरिसारगुहा' गिरि [illegible] प्रधान [illegible] (६४) 'केहिरलोकरा' [illegible] (६५) 'विश्वगानाम्' [illegible] हरिद्रा नगानां [illegible]

(६६) 'अरविंदवान्' अरवि नास्ति रवि यस्मिन् तस्मिन् अरविस्मिन् दवान्दावानलान् अरविन्दवान् अरविन्दानि कमलानि विद्यन्ते यस्मिन्स (६७) 'अधर' हे कृष्ण ! त्व गोवर्धनपर्वत अधर इति धृतवान् अधर ओष्ठ (६८) 'समरंजयम्' समरं संग्रामम् जयं जयशब्दम् अह समरंजय रागिणी पृथ्वीमकरवम् (६९) 'केशवनौका' हे केशव नौका वने भोगी गृहं यस्यासौ वानर हे केशव नौका नाव (७०) 'अनुमानासे' अनु न [illegible] (७१) 'विमलकमलम्' [illegible] (७२) 'परजनेनदि' [illegible] (७३) 'सितान्देवम्' [illegible] (७४) 'विधुतिरहित' [illegible] (७५) 'नरकोप्त' [illegible]

समिति नल निहन्ति शत्रु विष्णो का मनसि मुद सदा तनोति । तुच्छ सच्छरधिमुख निगद्यते कि पश्चलै सममपमान एव केषु ॥ ७६ ॥ कामरिरहितामिच्छति भूप वामुद्धरयति शूरस्त्र्य । केनाकारि हि मन्मथजनन केन विभाति च तरुणीवदनम् ॥ ७७ ॥ हिमांशुखण्ड कुटिलोज्ज्वलप्रभ भवेद्वराहप्रवरस्य कीदृशम् । विहाय वर्ण पदमध्यसस्थित न किं करोत्येष जिन करोति किम् ॥ ७८ ॥ वसन्तमासाद्य वनेषु कीदृशा पिकेन राजन्ति रसालभूरुहा । निरस्य वर्णद्वयमत्र मध्यम तत्र द्विषा कान्ततमा तिथिश्च का ॥ ७९ ॥ उरःस्थल कोऽत्र विना पयोधर निभर्ति सबोधय मारुताशनम् । वदति क पत्तनसभव जना फल च किं गोपवधूकुचोपमम् ॥ ८० ॥ वसन्तमासाद्य वनेषु राजते विकासि कि वल्लभ पुष्पमुच्यताम् । विहगम क च परिस्फुटाक्षर वदन्ति किं पङ्कजसभव विदु ॥ ८१ ॥ समुद्यते कुत्र न याति पासुला समुद्यते कुत्र भय भवेज्जलात् । समुद्यते कुत्र तत्रापयात्यरि प्रहीणसबोधनवाचि किं पदम् ॥ ८२ ॥ तपस्विनोऽत्यन्तमहासुखाशया वनेषु कस्मै स्पृहयन्ति सत्तमा । इहापि वर्णद्वितय निरस्य भो सदा स्थित कुत्र च सत्त्वमुच्यताम् ॥ ८३ ॥ पदमनन्तरवाचि निमिष्यते कपिपतिर्निनयी ननु कीदृश । परगुण गदितु गतमत्सरा कुरुत किं सतत भुवि सज्जना ॥ ८४ ॥ वदति राममनुष्य जघन्यजो वसति कुत्र सदालसमानस । अपि च शक्रसुतेन तिरस्कृतो रविसुत निमसौ विदधे त्वया ॥ ८५ ॥ मेघात्यये भवति क समद सुभग च किं क्रमधर मुरजित् । कुटुतैलमिश्रितगुडो नियत विनिहन्ति क त्रिगुणसप्तदिने ॥ ८६ ॥ वर्षासु का भवति निर्मधु कीदृगब्ज शेषं बिभर्ति वसुधासहित क एक । आमन्त्रयस्व धरणीधरराजपुत्रीं को भूतिभस्मनिचिताङ्गजनाश्रय स्यात् ॥ ८७ ॥ कौ शक्रस्य वलयावपयोधर क कीदृक्परस्य नियत वशमेति भूप । सनोधयोरगपतिं विजयी च कीदृग्दुर्योधनो नहि भवेद्वद कीदृशश्च ॥ ८८ ॥ कासुज्जहार हरिरम्बुधिमध्यमग्ना कीदृक्श्रुत भवति निर्मलमानसानाम् । आमन्त्रयस्व वनमग्निशिखावलीढ तथापि को दहति के मदयन्ति भृङ्गान् ॥ ८९ ॥ मेघात्यये भवति किं सुभगावगाह का वा विडम्बयति वारणमङ्गनेशा । दुर्वारवीर्यविभवस्य भवेद्रणे क का स्मरतन्त्रसुभगास्तरणिप्रभाभि ॥ ९० ॥ कल्याणवाक्त्वमिव कि पदमत्र कान्त सद्रूपतेस्त्वमिव क परितोषकारी । क सर्वदा नृपगतिस्त्वमिवातिमात्र भूत्याश्रित कथय पालितसर्वभूत ॥ ९१ ॥ सूर्यस्य का तिमिरकुञ्जर वृन्दसिंही सत्यस्य का सुकृतवारिधिचन्द्रलेखा । पार्थश्च कीदृगरिदावहुताशनोऽभूत्का मालतीकुसुमदाम हरस्य मूर्ध्नि ॥ ९२ ॥ मेघात्यये भवति का सुभगावगाहा वृत्त वसन्ततिलक त्रियदक्षराणाम् । भो भो कदर्यपुरुषा विषुवद्दिने च वित्त च व सुबहु तत्क्रियता निमित्तत् ॥ ९३ ॥ प्राप्ते वसन्तसमये वद किं तरूणा कि क्षीयते विरहिणामुरग निमेति । किं कुर्वते मधुलिहो मधुपानमत्ता कीदृग्वन मृगगणास्त्वरित त्यजन्ति ॥ ९४ ॥ दुर्वारवीर्य सरुषि त्वयि का प्रसुप्ता श्यामा सपत्नहृदये [1]सुपयोधरा च । तुष्टे

(७६) 'अभिमानिषु' अभि नास्ति भीर्भय यस्य तत् मा लक्ष्मी अनिषु न विद्यन्ते इषवो बाणा यस्मिस्तत् अभिमानिषु गवत्सु (७७) 'कुकुमेन' कु पृथ्वीम् कु धराम् इन कृष्णेन कुङ्कुमेन (७८) 'दष्ट्राभम्' दष्ट्रा दाढा तद्वद् आभा शोभा यस्य तत् द्वितीयायामुदय प्राप्तश्चन्द्रो वक्रोज्ज्वलगुणेन सूकरदष्ट्रया सहोपमीयते दम्भ कपट जिन न करोति भद्र कल्याण जिन करोति (७९) 'कान्तगिरा' कान्तागिरा कान्ता मनोहरा गीर्वाणी यस्यासौ कान्तगीस्तेन कारा बन्दिगृहम् राका पूर्णमासी (८०) 'नागरगम्' ना पुमान् इ नाग इ सर्पे नागर नगरे भवस्तम् नागरङ्ग नारङ्गीफलम् (८१) 'किंशुकम्' किंशुक पलाशम् शुक कीरम् क ब्रह्माणम् (८२) 'हिमकरे' हिमकरे चन्द्रे उदिते सति मकर मत्स्य उदिते सति करे हस्ते सायुध कङ्कणे सति रे रे राम इति चामन्त्रणे (८३) 'तपसे' तपसे सकारभिन्न सकारे वनम् (८४) 'अनुसराम' अनु पश्चाद्वाचि रामस्य वर्तमान सराम अनुसराम वय परगुण प्रति अनुसरण कुर्म (८५) 'अनुजगृहे' हे अनुज भ्रात ! गृहे मया अनुजगृहे अनुगृहीत (८६) 'श्वामरोगम्' श्वा तेषु दिनेषु मैथुनेच्छो भवेत् भरमसूत्रागम् अप गोवर्धनम् श्वामरोगम्

(८७) 'कालिकापालिकमठ' कालिका श्यामता अपगता अलयो भ्रमरा यस्मात्तदपालि भ्रमररहितम् कमठ कच्छप हे कालि हे पार्वति ! कापालिको योगी तस्य मठ (८८) 'अहीनाक्षतनय' अही सर्पा ना पुमान् क्षतनय क्षत खण्डितो नयो न्यायो येन स अन्यायवान् हे अहीन सर्पाणा स्वामिन् ! अक्षतनय न क्षतो नयो न्यायो येन स अखण्डन्यायवान् हीने अक्षिणी यस्यासौ हीनाक्षोऽन्धस्तस्य तनय पुत्र न हीनाक्षतनयो अहीनाक्षतनय धृतराष्ट्रो हि हीनाक्षोऽन्ध इति पौराणिका तत्पुत्रो दुर्योधनोऽहीनाक्षतनयो न भवति, किंतु अन्धपुत्र इत्यर्थ (८९) 'कुन्दमकरन्दबिन्दव' कुं पृथ्वीम् दमयति उपशमक्षमायुक्त भवतीत्यर्थ हे दविन् दवो विद्यते यस्मिस्तत् दवि तत्संबोधनम् दव वनाग्नि कुन्दमकरन्दबिन्दव कुन्दाना पुष्पविशेषाणा मकरन्द पुष्परसस्तस्य बिन्दव कणा (९०) 'सरोजराजय' सरस्तडागम् जरा वयोहानि जय सरोजराजय कमलश्रेणय (९१) 'शंकर' श सुखम् करो राजभाग शंकरो महादेव (९२) 'भागीरथी' भा कान्ति गी वाणी रथी रथो विद्यते यस्य स भागीरथी गङ्गा (९३) 'नदीयताम्' नदी इयतां एतावदक्षराणाम् न दीयताम् (९४) 'दवविकलम्' दलम् वलम् किलम् कल अव्यक्त मधुरम् दवविकल दावाग्निना व्याकुलम्

१ श्यामवर्णो लोहमयत्वात्, पक्षे,-षोडशवार्षिकी २ सुष्ठु पय जलं धरतीति सुपयोधरा लोहनिर्मिते खड्गे पानीय दीयते इति प्रसिद्धि, पक्षे-सुस्तनी

कीदृग्भुजगेऽस्ति किं कीदृक्कुम्भसमुद्भवस्य जठर कीदृग्यियासुर्वधू । श्लोक कीदृगमीप्सित सुकृतिना कीदृङ्नभो निर्मल क्षोणीमाह्वय सर्वग किमुदित रात्रौ सर कीदृशम् ॥ १०९ ॥ मुण्ड पृच्छति किं मुरारिशयन का हृति रूप नृणा कीदृग्वीरजनश्च कोऽतिगहन सबोधयात्रचितम् । का धात्री जगतो बृहस्पतिवधू कीदृक्कवि क्वादत कोऽर्थ कि भवता कृत रिपुकुल कीदृक्सरो वासरे ॥ ११० ॥ कस्मै यच्छति सज्जनो बहुधन सृष्ट जगत्केन वा नमोमाति च को गले युवतिभिर्नेण्या च का धार्यते । गौरीश कमताडयच्चरणत वा रक्षिता राक्षसैरारोहादवरोहत कलयतामेक द्वयोरुत्तरम् ॥ १११ ॥ क स्यादम्बुदयाचको युवतय क कामयन्ते पतिं लज्जा केन निवार्यते निकटके दासे कथ यावनी । भाषा दर्शयतेति वस्तुषु महाराष्ट्रे कदा वा भवेदाद्यन्ताक्षरयोर्हि लोपरचनाचातुर्यम पूर्यताम् ॥ ११२ ॥ का मेघादुपयाति कृष्णदयिता का वा सभा कीदृशी का रक्षत्यहिहा शरद्धिकचयेत्क धैर्यहृद्वी च का । क घत्ते गणनायक करतले का चञ्चला कथ्यतामारोहादवरोहतश्च निपुणैरेक द्वयोरुत्तरम् ॥ ११३ ॥ कुत्र श्री स्थिरतामुपैति भुवि को दु खी निमीषत्पद धर्मादीन्विनिवारयन्ति पथि के पान्थस्य दीनस्य च । का सदुद्धिरिह श्रियश्च तमम कौ नाशको प्रोच्यता गच्छन्त पथिक किमाह यवन सङ्गाभिलाषान्वित ॥ ११४ ॥ क खे भाति हतो निशाचरपति केनाम्बुधौ मज्जति क कीदृक्तरुणीविलासगमन को नाम राज्ञा प्रिय । पन्न किं नृपते किमप्सु ललित को रामरामाहरो मत्प्रश्नोत्तरमध्यमाक्षरपद यत्तत्तवाशीर्नेच ॥ ११५ ॥ किं त्राण जगता न पश्यति च क के देवताविद्विष किं दातु करभूषण गिरुदर क कि पिधान दृशाम् । के खे खेलनमाचरन्ति सुदृशा किं चारुताभूषण बुद्ध्या ब्रूहि विचार्य सूक्ष्ममतिम स्तवेक द्वयोरुत्तरम् ॥ ११६ ॥ क कर्णारिपिता गिरीन्द्रतनया कस्य प्रिया कस्य तुक्को जानाति परेङ्गित विषमगु कुत्रोदभूत्कामिनाम् । भार्या कस्य विदेहजा सुदति का भौमेऽह्नि निन्द्यश्च कस्तत्प्रत्युत्तरमध्यमाक्षरपद सर्वार्थसत्पक्रम् ॥ ११७ ॥ लावण्य क नु योषिता नभसि के सचारमातन्वते कासामुन्नततरा भवन्ति निनदा क शीद्दतो दपती । केषु श्री प्रकटीचकार भगवान्सीतापति पौरुष मत्प्रश्नोत्तरमध्यवर्णघटितो देवो मुदे सोऽस्तु व ॥ ११८ ॥ क पूज्य सुजनत्वमेति कतम क स्तीयते पण्डितै श्रीमत्या शिवया च केन भुवने युद्ध कृत दारुणम् । किं वाञ्छन्ति सदा जना युवजना ध्यायन्ति किं मानसे मत्प्रश्नोत्तरमध्यमाक्षरपद भूयात्तवाशीर्नेच ॥ ११९ ॥ क्षोणी क सहते करोति दिवि का नृत्य शिवाया पतिर्भूताना कमयुङ्क्त जीवहरणे का रामशत्रो पुरी । क रक्षन्ति च साधव पशुपते किं वाहन प्रोच्यतामालोमप्रतिलोमशास्त्रचतुरैरेक द्वयोरुत्तरम् ॥ १२० ॥

(१०९) 'कुमुदवनपरागरजिताम्भोविहितगमागमकोकमुग्धरेसम्' कुमुद पृथ्व्या हर्षोऽकारि, पृथ्वी उद्धृता इत्यर्थ अवनपरा अवन रक्षण धनस्य गोपन तत्र परा मावधाना गर विषम् जितानि पीतानि अम्भासि जलानि येन तज्जिताम्भ विहितगमा विहित कृतो गमो गमन यया सा गमक अर्थाभिप्रायेण गम्यते प्राप्यते स गमक अकमुद क पानीय मुञ्चन्ति ते कमुचो मेघा न विद्यन्ते कमुचो यस्मिन् तत् अकमुद्, मेघै रहितमित्यर्थ हे धरे हे पृथ्वि ! स आकाशम् कुमुदवनपरागरञ्जिताम्भोविहितगमागमकोकमुग्धरेस कुमुदानां चन्द्रविकासिकमलानां वनानि तेषां परागेण रजसा रञ्जित रक्तमुक्त कृत अम्भो जल यस्मिन् तत् ईदृश सर पुन कीदृशम् । विहितौ निष्पादितौ गमागमौ गमनागमने याभ्यां तौ विहितगमागमौ तौ च तौ कोकौ च ताभ्यां कृत्वा मुग्धा सुन्दरा रेखा पङ्क्तिर्यस्मिन् तत् यतस्तौ चक्रवाकचक्रवाकौ अन्योन्य 'वियुक्तौ मन्तौ रात्रौ मिलनाय तीरात्तीरं पर्यटत' तयोर्गमनागमनेन जलरेखाया भवात् रात्रौ सर ईदृशं इति भाव (११०) 'विकचवारिजराजिमुद्बोधच्छन्तिभूरिपरागविराजितम्' हे विकच विगता कचा केशा यस्य स तत्संबोधन हे वारिदहित ! वारि जलम्, महाप्रलये हरि शेषनागशय्यायां समुद्रजले शेते जरा वृद्धत्वम्, आजिमुद्र आजी संग्रामे समुद् सहर्ष भव संसार, हे अच्छन्ति हे अखण्डित ! भू पृथ्वी इपरा कामसेन परा उत्कृष्टा नित्ययौवनवती गवि वाण्याम्, रा द्रव्यम्, जितम् 'विकचवारिजराजिमुद्बोधच्छन्ति भूरिपरागविराजितं' विकचाना प्रफुल्लानां वारिजाना कमलानां राजि पङ्क्तिस्तया समुद्भवस्तेन उच्छन्तिो यो भूरि प्रचुर पराग तेन विराजित शोभितम् (१११) साधवे-वेधसा, कालिमा-मालिका, काल-एका (११२, ११३) धारा-राधा बधा-धाव (अहिहा इन्द्र) धरा-धरा पारा-रोपा (विदुर)

(११४) इमे उत्तरे अर्धस्लोकेरिदे एकान्येषा योजनासौकर्याय लिख्येते—प विष्णौ, भयी भीतियुक्त, आ लय (डलयोरभेदात् खड) एव प भय्या खड (११५) मदेश रामेण मैनाक मथरम् सचिव तुरग गज राजीवम् रावण यत मध्य माक्षरघटित वाक्य 'हे मे नाथ ! चिर जीव' इति राजानं प्रति आशीर्वचनम् (११६) अध अश्र दृग्विहीनश्च दानवा दैत्या दानवारि च, दानोदरमित्यर्थ तम राहु अन्धकारश्च वय पक्षिण तारुण्य च (११७) वासव हरस्य हलस्य द्युगामी 'हलस्य पिति कृति तुद' इति सूत्रेण मतिमान् नभसि रामस्य दुसुति अभ्यङ्ग एत मध्यमाक्षरघटितवाक्य 'सरस्वति नमस्तु भ्यम्' इति विषमा पञ्च गावो बाणा यस्येति विषमगु काम (११८) नैपुण्ये, अण्डजा, पारीणा, पराते, रघुषु मध्यमवर्णोद्धा रात्पुण्डरीकाक्ष—इत्युत्तरम् पारीणमित्यस्य नर्मपूर इत्यर्थ 'कर्षे रीपुरयो पारी पञ्चरूक्वां च हस्तिन' इति विश्व (११९) भूपेन्द्र, मदश, संसदि, दुर्गेण (रैन्य) वैभव, युवति, मध्यमाक्षरोद्वारेण देव मर्गो भव इत्युत्तरम् इकोरत्य स्या इति तात्पर्यम् (१२०) मार—रेमा काल—एका दीर्ने—नदी

बलारवा । वारलावहलामन्दकरला महलामला ॥ ९ ॥ भामते प्रतिमासाररमामाताहताविता । भाविताश्मा शुभा वादे देवामा बत ते समा ॥ १० ॥ मारमासुषमा चारु रुचा मारवधूत्तमा । मात्तधूर्ततमावासा सा वामा मेऽस्तु मा रमा ॥ ११ ॥ रसा साररसा सार मायताक्ष क्षतायसा । सातावात तवातामा रक्षतस्त्वस्त्वतक्षर ॥ १२ ॥ यदान तोऽयदानतो नयात्यय न यात्ययम् । शिवे हिता शिवेहिता स्मरामिता स्मरामि ताम् ॥ १३ ॥ आम्नायानामाहान्त्यावा गीतिर्नीतिर्भीतिः प्रीतिः । भोगो रोगो मोदो मोहो ध्येयेच्छे च्छेत्क्षेमे देशे ॥ १४ ॥ नागविशेषे शेषे शेषेऽशेषेऽपि महते जगति । हसमिकाल काल या लङ्कालङ्घने स्तुतिर्भवत ॥ १५ ॥ विनायमेनो नयतासुखादिना विना यमेनोनयता सुखादिना । महाजनोऽदीयत मानसादर महाजनोदी यतमानसादरम् ॥ १६ ॥ निश्चस्य हेतुरमरैर्बहु गीयसे त्वं विश्वम्भरे शिवशिवे निगुणात्ममूर्ते । विद्योमतोऽपि परमा प्रथमा वदन्ति त्वां योगिन स्तुतिपरा प्रणिधान दृष्ट्या ॥ १७ ॥ पायाद्वः करणोऽरणो रणरणो राणो रणोवारणो दत्ता येन रमारमारमरमा रामारमा सा रमा । स श्रीमानुदयोदयोऽदयदयो दायोदयोदेदयो विष्णुर्जिष्णुरभीरभीरभिरभीराभीरभीसारभी ॥ १८ ॥

---

## भाषाचित्रम्

उत्सरङ्गकल्तिोत्कटारीमाजिरा उत भयकरमाला । सन्तु पायकगणा जय तेसव गामगोहुरभिलाव इलावी ॥ १ ॥ हरनयनहुताशज्वालया जो जलाया रतिनयन-

---

(९) मुरनबन्धोऽयम् शरद्वर्णनमेतत् सरलो दीर्घ आसमन्ताद्वहलेन प्रभूतेनारम्भेण तरलाना चञ्चलानामलिकुलाना भ्रमरसैन्यानामारव शब्दो यस्या सा सरलावहलारम्भतरलालिबलारवा तथा वारलाभिर्हसीभिर्बहला सतता यदि वा वारेण परिपाटया लावो लवन येषा तानि तथाविधानि हलानि हलकृष्टधान्यक्षेत्राणि यस्या सा तथाविधा तथा करं लाति गृह्णन्ति ये ते करला नृपा अमन्दा यात्राया सोधमा करला यस्या सा तथाविधा तथा बहलानि प्रभूतान्यामलान्यामलकीफलानि यस्या सा तथाविधा यदि वा बहलमत्यर्थममला निर्मला बहुलामला (१०,११) पद्मबन्धः (१२) सर्वतोभद्र हे सार उत्कृष्ट ! तव रक्षत पालयत सत सा रसा पृथ्वी सरसा उत्कृष्टरसास्तु भवतु हे आयताक्ष दीर्घलोचन, तथा सा क्षतायसा चास्तु क्षतो नाशित आयोऽधागमो येस्ते क्षतायाश्चौरादयस्तान्स्यस्यन्त नयतीति कृत्वा तथा सात सुखमवतीति सातावा, श्रेयस्करीत्यर्थ अस्त्विति सर्वत्र योज्यम् हे अत, अतति नित्यमेवोद्यम यत इत्यर्थ तथा अतासा अक्षया रसा भवत्विन्यत्रापि योग तुर्नियमे रक्षत एव, न त्वबलिसम्य तथा हे अतक्षर ! तत्क्षण तक्षस्तनूकरण त राति ददातीति तक्षर, न तक्षरोऽतक्षर, पुष्टिद इत्यर्थ (१३) यस्यामानतोऽयं जन नयात्यय नीतिविक्षेप न याति कुत अयदानत अर्थात् तयैवास्य शुभावहविधिदानात् शिवे मङ्गले हिता अनुकूलाम् शिवेन महादेवेन ईहिता प्रार्थनीयाम् स्मरेण कन्दर्पेण अमिता मातुमयोग्याम् अनभिभूतामित्यर्थ (१४) चतुर्मात्रिको विद्युन्मालाछन्द आम्नायानां वेदानामन्त्या वाक् उपनिषद् आह कथयत् किम् ? इति

वत् राक्षस्य कालः कृष्ण कालः हन्ति मारयसि अतो भवतस्तव लङ्काया लङ्घने पारगमने का स्तुतिः स्तवन ! न किमपीत्यर्थ- (१६) मृत जटायुश दृष्ट्वा राम प्रति लक्ष्मणोक्तिरियम् अय विना पक्षिस्वरूप पुरुष जटायु यमेन यतमानसादर यतमानाना रक्षितुमुद्यताना साद विषाद राति ददातीति तद् यथा स्यात्तथा अर शीघ्र मानसमानसं चित्तमेव मानसं मानसंसरस्तस्मात् अदीयत अखण्डयत अय विभूत ! महाजन महात्मा महाजनोदी च मद उत्सवमजन्ति क्षिपन्ति ये दुर्जनास्तत्रोदी तद्दमा रक- यमेन विभूतेन ! एनो विना अपराधमृते नयता स्वपुर प्रापयता असुखादिना प्राणभङ्गेन दुःखादिना ऊनयता च हीन कुर्वता च इत्यर्थ-

(१७) अस्य वसन्ततिलकाछन्दसो दुर्गास्तुतिरूपस्य पद्यस्य चतुर्णामपि पादाना षष्ठसप्तमाष्टमाक्षरलोपेन इन्द्रवज्रावृत्त शिवस्तुतिश्च जायते (१८) स पुराणप्रसिद्ध वेवेष्टि व्याप्नोतीति विष्णुर्भगवान् वो युष्मान् पायादित्यर्थ व इति बहुवचनेन सर्वसमत्व सूचितम् मायया सृष्टस्य तस्य कथ रक्षकत्व भवतीत्यत आह—श्रीमानिति श्रीर्नित्यमस्यास्तीति श्रीमान् माया विनाभूदित्यर्थ ननु बहूना रक्षणपरिपन्थिना विद्यमानत्वात्कथमस्य रक्षकत्वमित्याह—विष्णुरिति जयनशील इत्यर्थ तथा च रक्षणपरिपन्थिनोऽपि तद्वशगा इति भाव इदानी व इति बहुवचनोक्त सर्वसमत्व द्रढयितुमवतारविशेषणमुखेनाह—करण इति क जल रणति गच्छतीति करण मत्स्यकूर्मावतारवानित्यर्थ पुन अरण न विद्यते रण संग्रामो यस्य स तथा अनेन च ब्रह्मकमण्डलुप्रभवी वामनावतार उक्तो भवति यस्येति शेष स च ! यस्य विष्णो राण रणस्याय राण रणसैव चीत्यर्थ रणरण रणाच्छब्दाज्जायमानो रण शब्दो रणरण प्रतिशब्द रणोवारण रणस्य उलक्षण व्रणादिचिह्न येषा ते रणव वीरा तान् वारयतीति रणोवारण अभूत् उकारस्त्विह लक्षणम् अनेन नृसिंहावतार उक्तो भवति स ! येन अर शीघ्र अरीणा समूहो आर अरिवृन्द मिनोति हिनस्तीति आरमा तेन आरमा अरिकुलनिहन्त्रा रमा लक्ष्मीर्विप्रेभ्यो विश्राणिना दत्ता तथा रमया रमते असौ रमारमो विष्णुस्तस्मिन्रमते ते रमारमरमा ब्राह्मणास्तान् आरमयति आह्लादयति स, तथा आस बभूवेत्यर्थ अनेन क्षत्रियान्तकारिपरशुरामावतार उक्तो भवति पु० क० ! उदयोदय याति प्राप्नोतीति य न य अय अप्राप्त उदयो येन तत् अयोदय भूधरादि उत् उद्धृत अयोदय अप्राप्तोदय चलनिमग्न भूधरादि येन स तथा अनेन आदिवराह उक्तो भवति पु० क० ! अदयदय अदयेषु दयते स तथा क्रूरेष्वपि दयावानित्यर्थ अनेन बौद्धावतार उक्तो भवति पु० क० ! दायोदयोदेदय दायार्थ विभागार्थ उद्धत अयो लोहमय शस्त्र येस्ते दायोदया भ्रातरो नान्धर्तिं खण्डयतीति तथाविधोऽर्जुन तस्मिन् दयते स तथा अनेन कृष्णावतार उक्तो भवति पु० क० ! अभीरभीरभि पराङ्गनाहरणादिरूप कृत्येभ्यो अभीरा निर्भया रावणादयस्तेषु भिये भयार्थं रमते रामरूपेण वर्तते स तथा अनेन रामावतार उक्तो भवति पु० क० ! अभीराभीरभीसारभी अभीरा शूरा भीरा कातरा तेष्वपि कोऽप्यलोभादिवशात् भिय सारयन्ति प्रयच्छन्ति ते दुष्टम्लेच्छास्तेषां भी यस्मात् स तथा अनेन कल्क्यवतार उक्तो भवति

(१) हे राजन् ! तव पायकगणा सेवकलोका उत्सरङ्गकल्तिोत्कटारीमाजिरा उत्सरङ्गा अतिमुदिता कल्तिोत्कटा सज्जितप्रमुख्क

**मयूर**

मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभि । कलापिन प्रनृत्यन्ति काले जीमूतमालिनि ॥ २० ॥

**चातक**

दम्भोलिस्फूर्जदम्भोधरविपुलतडिद्दम्भगम्भीरनादैरम्भ सभारसभावनकुतुकिकुल चातकाना प्रनृत्यत् । ऊर्ध्वे विन्यस्य चञ्चूपुटमुपरि परिभ्राम्यदुत्पातवातैरम्भोदोन्मुक्तमम्भ कणमपि न चिरात्प्राप्य नम्र मिथोऽभूत् ॥ २१ ॥

**पारावत**

कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षण । पारावत परावृत्य रिरसुश्चुम्बति प्रियाम् ॥ २२ ॥

**बक**

नालेनेव स्थित्वा पादेनैकेन कुञ्चितग्रीवम् । जनयति कुमुदभ्रान्ति धूर्तबको बालमत्स्यानाम् ॥ २३ ॥ स्थित्वा धैर्यादुपाम्भ समजठरशिराश्चक्रमूर्तिर्मुहूर्त धूर्त सत्यक्ततीर क्वतिचिदपि पदान्युच्चकै क्षुधिताङ्घ्रि । पश्चाद्ग्रीवा प्रसार्य त्वरितगतिरपा मध्यमाविश्य चञ्च्वा चञ्चतीमूर्ध्वकण्ठ कथमपि शफरीं स्फारिताक्षो बकोऽत्ति ॥ २४ ॥

**कुक्कुट**

न्यञ्चच्चञ्चलचञ्चुचुम्बनचलच्चूडाग्रमुग्रपतच्चक्राकारकरालकेसरसटास्फारस्फुरत्कन्धरम् । वारवारमुदञ्चिचञ्चलघनभ्रश्य न्नखमुण्णयोर्दधा कुक्कुटयोर्द्वयो स्थितिरिति क्रूरक्रम युध्यतो ॥ २५ ॥ पक्षावुत्क्षिप्य धुन्वन्सकलतनुरुहान् भोगविस्तारितात्मा प्रागेवोद्गीननिद्र स्फुरदरुणकरोद्भासित ख निरीक्ष्य । प्रात प्रोत्थाय नीडस्थितचपलतनुर्घर्घरध्वानमुच्चैरुद्गीव पूर्वकायोन्नतविकटसट कुक्कुटो रारटीति ॥ २६ ॥

**गौरखर-कृकलासौ**

ग्रीष्मादित्यकरप्रतप्तसिकतामध्योपविष्ट सुख शेते गौरखरो मरुस्थलभुवि प्रोथ निधाय क्षितौ । गुञ्जज्जाहककण्ठवाहृतमरुद्धूतोत्पतद्धूलिभिश्छिन्नाङ्ग कृकलासकोऽपि निभृत मार्तण्डमुद्वीक्षते ॥ २७ ॥

**सर्प**

आलोकत्रस्तनारीकृतसभयमहानादधावज्जनौघव्याप्तद्वारप्रदेशप्रचुरकलकलाकर्णनस्तब्धचक्षु । काष्ठ दण्ड गृहाणेत्य तिमुखरजनैस्ताडितो लोष्टघातैर्भीत सर्पो गृहस्थानधिगत विवर कोणत कोणमेति ॥ २८ ॥

**पुलिन्द**

वामस्कन्धनिषण्णशार्ङ्गकुटिलप्रान्तार्पिताधोमुखस्रस्तद्रोणितलम्बमानशशका वेणीस्खलच्चामरान् । ज्यान्तप्रोतकपोतपोतनिपतद्रक्ताक्ततूणीरका सोऽप्यद्यत्वरितक्रमभेदजनिता स्कन्दा पुलिन्दा पुर ॥ २९ ॥

**पथिक**

गायति हसति च रुदति हृदयेन धृता प्रिया विचिन्तयति । समविषम न च विन्दति गृहगमनसमुत्सुक पथिक ॥ ३० ॥ मातर्धर्मपरे दया कुरु मयि श्रान्तेऽद्य वैदेशिके द्वारालिन्दककोणके सुनिभृत यास्यामि सुप्त्वा निशि । इत्युक्ते सहसा प्रचण्डगृहिणीवाक्येन निर्भर्त्सित स्कन्ध यस्तपलालमुष्टिविभव पान्थ पुन प्रस्थित ॥ ३१ ॥ भद्र ते सदृश यदध्वगशतै कीर्तिस्तवोद्धुष्यते स्थाने रूपमनुत्तम सुकृतिना दानेन कर्णो जित । इत्यालोक्य भृश दृशा करुणया शीतातुरेण स्तुत पान्थेनैकपलालमुष्टिरहितविना गर्जायते हालिक ॥ ३२ ॥ देशैरन्तरिता शतैश्च सरितामुर्वीभृता काननैर्यत्नेनापि न याति लोचनपथ कान्तेति जानन्नपि । उद्ग्रीवश्चरणार्धरुद्धवसुध कृत्वाश्रुपूर्णे दृशौ तामाशा पथिकस्तथापि किमपि ध्यायन्मुहुर्वीक्षते ॥ ३३ ॥

**शूर**

खड्गहस्तोऽरिमालोक्य हर्षामर्षसमन्वित । शूर पुलकितो रक्तनेत्रो हसति जृम्भते ॥ ३४ ॥

**बाल**

धूलीधूसरतनवो राज्यस्थितिरचनकल्पितैकनृपा । कृतमुखवाद्यविकारा क्रीडन्ति सुनिर्भर बाला ॥३५॥ आयातो भवत पितेति सहसा मातुर्निशम्योदित धूलीधूसरितो विहाय शिशुभि क्रीडारसान्प्रस्तुतान् । दूरात्स्मेरमुख प्रसार्य ललित बाहुद्वय बालको नाथन्यस्य पुर समेति परया प्रीत्या स्तनन्धयरम् ॥ ३६ ॥

**कुमार**

अकूर्चारम्भोऽपि प्रतिचुबुकदेश करतल प्रतिज्ञाया कुर्वन् युवतिषु दृश स्निग्धतरलाम् । कुमारोऽहकारात्परिषदि समानानगणयन्भुजौ वक्ष पश्यन्नववयसि कान्तिं वितनुते ॥३७॥

**नर्तकी**

खेदक्लेदितकङ्कणा भुजलता कृत्वा मृदङ्गाश्रया चेटीहस्तसमर्पितैकचरणा मञ्जीरसश्लिथया । सा भूय कुचकम्पसूचितरय नि श्वासमामुञ्चती रङ्गस्थानमनङ्गसात्कृतवती तालावधौ तस्थुषी ॥ ३८ ॥

**लेखनकर्त्री**

उन्नमितैकभ्रूलतमाननमस्या पदानि रचयन्त्या । कण्टकितेन प्रथयति मय्यनुराग कपोलेन ॥ ३९ ॥ यद्भ्रूलते तरलिते यदुदङ्गुलीक पाणि पुरो यदपि चक्षुरलब्धलक्ष्यम् । उन्मुद्रिताधरदल च यदास्यमस्यास्तत्काव्यकर्मणि निषिक्त मवैमि चेत ॥ ४० ॥

**कलमकण्डनीगीतय**

विलासमसृणोल्लसन्मुसललोलदोकन्दलीपरस्परपरिस्खलद्वलयनिस्वनोद्धुरा । लभन्ति कलहुंकृतिप्रसभकम्पितोर स्थलत्रुटद्गमकसकुला कलमकण्डनीगीतय ॥ ४१ ॥

**इति श्रीसुभाषितरत्नभाण्डागारे चतुर्थं प्रकरण समाप्तम् ।**

नुशयस्तरुणीनामुन्मिमील विशदं निधुवनेषु ॥ १५ ॥ कान्तया सपदि कोऽप्युपगूढः प्रौढपाणिरपनेतुमियेष । संहतस्तातिरस्कृतदृष्टिर्भ्रष्टमेव न दुकूलमपश्यत् ॥ १६ ॥ आहतं कुचतटेन तरुण्या साधु सीधुमधुनेति पपात । शुष्यतः प्रियतमोरसि हारात्पुष्पवृष्टिरिव मौक्तिकवृष्टिः ॥ १७ ॥ सीत्कृतानि मणितं करुणोक्तिः स्निग्धमुक्तमलमर्थवचांसि । हासभूषणरवाश्च रमण्या कामसूत्रपदतामुप जग्मुः ॥ १८ ॥ उद्धतैर्निभृतमेकमनेकैश्छेदनं मृगदृशामभिरामैः । श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनिभिरक्षतमेव ॥ १९ ॥ ईदृशस्य भवतः कथमेतल्लाघवं मुहुरतीव रतेषु । क्षिप्तमायतमदर्शयदुर्व्यां काचिदाम जघनस्य महत्त्वम् ॥ २० ॥ प्राप्यते स्म गतचित्रकचित्रैश्छिन्नमार्द्रनखलक्ष्म कपोले । दध्रिरेऽथ रभसच्युतपुष्पा स्वेदबिन्दुकुसुमान्यलकान्ताः ॥ २१ ॥ यद्यदेव रुरुचे रुचिरेभ्यः सुभ्रुवो रहसि तत्तदकुर्वन् । आनुकूलिकतया हि नराणामाक्षिपन्ति हृदयानि तरुण्यः ॥ २२ ॥ प्राप्य मन्मथरसादतिभूमिं दुर्वहस्तनभराः सुरतस्य । शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः ॥ २३ ॥ पत्युः प्रवृत्तस्य रतौ जिगीषावचो निशम्याथ न किंचिदूचे । कलावती किं तु विहस्य तस्य कपोलयोः स्वेदमपाचकार ॥ २४ ॥ उरोरुहाम्भोरुहदर्शनाय विमुञ्चत कञ्चुकबन्धनानि । आनन्दनीराकुललोचनस्य प्रियस्य जातो विपुलः परिश्रमः ॥ २५ ॥ स्वामिन्प्रभो प्रिय गृहाण परिष्वजस्व किं किं शठोऽस्यकरुणोऽसि सुखोचितोऽसि । हा दुःसह स्खलस्खल विरमेति वाचः क्षीणा भवन्ति सुरते प्रणयानुवृत्ता ॥ २६ ॥ मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे कान्तापयोधरयुगे रतिखेदखिन्नः । वक्षो निधाय भुजपञ्जरमध्यवर्ती धन्यः क्षपां क्षपयति क्षणलब्धनिद्रः ॥ २७ ॥ कान्ते तथा कथमपि प्रथितं मृगाक्ष्या चातुर्यमुद्धतमनोभवया रतेषु । तत्कूजितान्यनुवदद्भिरनेकवारं शिष्यायितं गृहकपोतशतैर्यथास्याः ॥ २८ ॥ आसीन्तितालसनिवर्तितवारकाञ्चीगुरुण्ठवघनदरश्लथबाहुवल्लीम् । प्रस्वेदवारिकणिकाचितगण्डबिम्बां संस्मृत्य तामनिशमेति न शान्तिमन्तः ॥ २९ ॥ रतिरभसविनीता तत्र तत्र ताकुचान्तश्रमदमकराभा नाभिदेशेऽप्यधो वा । स्मितमधुरमुखीनां क्षीणनेत्रोत्सवानामधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥ ३० ॥ अविदितसुखदुःखं निर्गुणं वस्तु किंचिज्जडमतिरिह कश्चिन्मोक्ष इत्याचचक्षे । मम तु मतमनङ्गस्मेरतारुण्यपूर्णमदकलमदिराक्षीनीविमोक्षो हि मोक्षः ॥ ३१ ॥ अभिनवकुलका-लीमधिता गद्गदान्तं निगदति विनिगूढानन्दहृन्दोऽथ चेतः । सुदति वदति पुण्यैः कस्य धन्यैर्मनोजप्रसरसरसहृद्देतश्चापलं लोचनस्य ॥ ३२ ॥ भवत्यास्खलान्ते कृतकपटकण्डूतिपिहितस्मितं याते गेहाद्बहिरवहितालीपरिजने । प्रियास्यं पश्यन्त्याः स्मरशरसमाकूतसुभगं सलज्जाया लज्जा व्यगमदिव दूरं मृगदृशः ॥ ३३ ॥ दुकूलं दोर्मूलाद्व्यपनयति परीरम्भरसिके हरत्यम्भोजाक्षी निभृतनिभृतं नम्रवदना । प्रियाश्लेषद्वेषिण्यपसरतु लज्जा स्फुटमिति स्मितक्षीरेणेव स्तनस्पर्शशम्भु क्षपयति ॥ ३४ ॥ चिरविरहिणो रत्युत्कण्ठाश्लथीकृतगात्रयोर्नवमिव जगज्जातं भूयश्चिरादभिनन्दतोः । कथमपि दिने दीर्घे याते निशामधिरूढयोः प्रसरति कथा बह्वी यूनोर्यथा न तथा रतिः ॥ ३५ ॥ दृशा सपदि मीलितं दशनरोचिषा निर्गतं करेण परिवेपितं वलयकैर्व्याक्रन्दितम् । प्रिये समदयोषिता ननु निखण्ड्यमानेऽधरे परव्यसनकातरा निमिव कुर्वता साधव ॥ ३६ ॥ नैषा वेग मृदुतरतनुस्ताननीलं विसोढुं शक्ता नैवं चपल नितरां खेदयेन्दीवराक्षीम् । इत्यभ्यासं विदधत इति प्राणनाथस्य गत्वा कर्णोपान्ते निभृतनिभृतं नूपुरं शशतीव ॥ ३७ ॥ आयाते दयिते मनोरथशतैर्नीते कथंचिद्दिने वैदग्ध्यापगमाज्जडे परिजने दीर्घां कथां कुर्वति । दष्टास्मीत्यभिधाय सत्वरपदं व्याधूय चीनांशुकं तन्वङ्ग्या रतिकातरेण मनसा नीतः प्रदीपः शमम् ॥ ३८ ॥ गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा । मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥ ३९ ॥ दोर्भ्यां संयमितः पयोधरभरेणापीडितः पाणिजैराविद्धो दशनैः क्षताधरपुटः श्रोणीतटेनाहतः । हस्तेनानमितः कचेऽधरसुधास्यन्देन संमोहितः कान्तः कामपि तृप्तिमाप तदहो कामस्य वामा गतिः ॥ ४० ॥ ईषन्मीलितदृष्टिमुग्धहसितं सीत्कारधारावशादव्यक्ताकुलकेलिकाकुविकसद्दन्तांशुधौताधरम् । श्वासोत्कम्पिपयोधरोपरिपरिष्वङ्गात्कुरङ्गीदृशो हर्षोत्कर्षविमुक्तनिःसहतनोर्धन्यो धयत्याननम् ॥ ४१ ॥ श्लिष्टं मण्डलमेव विगलितं सम्भाषणं तम प्राणेन मधुमानकेनकशिग्गार्जीरायितं च स्थितम् । शान्तं कुण्डलमण्डनं कुचयुगं दृष्टिर्निमीलितं पीनं विद्रुमसंनिभं न हि ततो जाने किमासीदिति ॥ ४२ ॥ गाढाश्लेषनिपीडनाभिरमितामालोक्य हारावलीं म्लातुं हन्त प्रिया क्षणं निविडया नीव्यापि न व्यापृतम् । विस्रब्धाङ्गवेदनासहनया कामस्य धीरामना मानिनयोः समागमसुखं यूनोर्मनोगमना ॥ ४३ ॥ हारस्त्रुट्यति कङ्कणं निपतति सर्वाङ्गुरी विस्फुरत्यान्तं धावति सीत्करोति रजनीजानिर्यती मन्यते ।

१ मेखलाविमर्द-

काञ्ची क्षुभ्यति काञ्चनक्षितिधरे किं च क्षत चञ्चति प्रारम्भे मदनाहवस्य विजयी देवो मनोभूरभूत् ॥ ४४ ॥ सिन्दूर रविमिन्दुमाननमसो धम्मिल्लराहुस्त्वय यद्वाढ ग्रसतीव तत्प्रियतमे निर्णीतमौत्पातिकम् । चोले चञ्चलता भविष्यति मुहु स्साकुन्तले कृपण नीवी श्वसति न स्थिरा समुदयेदङ्गे महान्सगर ॥ ४५ ॥ पश्यन्तीं परिणामकेलिषु मुहुर्नि शङ्कमालिङ्ग्य ता प्रोल्लूजत्कलमप्रहीषमधर स्पर्धावती साप्यभूत् । नाह वेद्मि न वेत्ति सा च दयिता तत्रावयोश्चेष्टित शय्या वेत्ति न वेत्ति वा स तु कुत सङ्ग्राममलोल स्मर ॥ ४६ ॥ प्रत्यूह पुलकाङ्कुरेण निबिडाश्लेषे निमेषेण च क्रीडाकूतविलोकितेऽधरसुधापाने कथाकेलिभि । आनन्दाधिगमेन मन्मथकलायुद्धेऽपि यस्मिन्नभूदुद्गत स तयोर्बभूव सुरतारम्भ प्रियभावुक ॥ ४७ ॥ ईषत्कम्पपयोधर गुरुकटिप्रौढप्रहाराद्भुत खिद्यद्बालमनेकहास्यसरस सम्मन्दव्यथम् । वारवारमुर प्रहारसुभग सदश्यमानाधर किंचिद्वृत्तनितम्बदेशनखर धन्यो रत सेवते ॥ ४८ ॥ त्व मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासस्पृशि । शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो निर्यात शनकैरलीकवचनोपन्यासमालीजन ॥ ४९ ॥ कोक स्तोकविमुक्तमौक्तिकभरो निस्पन्दमिन्दीवर चाप चापलवर्जित हिमकरक्रोडे तम क्रीडति । वात कातरयत्यपाकृतरस बन्धूकमेतावती वार्ता क्वापि कदापि पाणिपिहिता कस्यापि वा तिष्ठति ॥ ५० ॥ धम्मिल्लो भङ्गमेतु प्रविशतु तिलक केशपाशान्धकार पत्राली गण्डपालीं त्यजतु च विवर कर्णयोर्गन्तुकामा । वामायाः कान्तदन्तक्षततितसहने एक एवाधरोऽसौ वीर कामाहवेऽस्मिन्निति वदति मुहुर्नूपुर क्वाणभङ्ग्या ॥ ५१ ॥

## विपरीतरतक्रिया

प्रशान्ते नूपुरारावे श्रूयते मेखलाध्वनि । कान्ते नून रतश्रान्ते कामिनी पुरुषायते ॥ १ ॥ पततु तवोरसि सतत दयिताधम्मिल्लमल्लिकानिकर । रतरसरभसकचग्रहलुलितालकवल्लरीगलित ॥ २ ॥ विपरीतमविपरीत यद्रतमन्यत्तदेव विपरीतम् । तरुमारोहति लतिका नारोहति च लतिका तरु क्वापि ॥ ३ ॥ साक्षादभूत्त्वयभूरय मुक्तास्तिमिरनिकर भरा । प्रणनाम शीतरोचिस्तरपाठ मेखला विदधे ॥ ४ ॥ वियति विलोलति जलद स्खलति विधुश्चलति कूजति कपोत । निष्पतति तारकाततिरान्दोलति वीचिरमरवाहिन्या ॥ ५ ॥ स्थगयति तम शशाङ्क चलति गिरि स्रवति तारकापटलम् । कथयति मन्ये काञ्चीपुरसीमनि किमपि सक्षोभम् ॥ ६ ॥ मुक्ता पतन्ति भूमौ बाला कलयन्ति केवला मुक्तिम् । चुम्बत्यम्बरमवनिं विपरीते किं न विपरीतम् ॥७॥ वल्गत्कुच व्याकुलकेशपाश खिद्यन्मुख स्वीकृतमन्दहासम् । पुण्यातिरेकात्पुरुषा लभन्ते पुमानमम्भोरुहलोचनानाम् ॥ ८ ॥ वक्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्न कुङ्कुम कापि कण्ठे । पुस्त्व तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गरेखा लिलेख ॥ ९ ॥ मधुरानसमुल्लसत्प्रवालचलहेमाचलकान्तिभिर्जटालम् । विधुनि पतदन्धकारजालशुभकाल क्व पुनर्विलोकयाम ॥ १० ॥ अभिमुखपतयालुभिर्ललाटश्रमसलिलैरपनीतपत्रलेख । कथयति पुरुषायितवधूना मृदितहिमद्युतिनिर्मल कपोल ॥ ११ ॥ तन्नास्ति कारयति यन्न मनोभवस्य सा शक्तिरप्रतिहता भुवने तथा हि । उद्वाह्य पीवरपयोधरमण्डलाग्र वल्गन्ति यत्पुरुषवत्प्रमदा अपीह ॥ १२ ॥ मुग्धे तवास्ति दयिता पुरुषो भव त्वमित्युक्तया नहि नहीति शिरो विधूय । स्वसात्कराप्रियकरे वलय क्षिपन्त्या वाच विनाभ्युपगम कथितो मृगाक्ष्या ॥१३॥ वीरायितेषु मृगशावविलोचनाना कण्ठोदिताम्यचरम कलकूजितानि । आम्रेडयद्भिरथ सौधगतै कपोतै शङ्के गृहीत इति सप्रति शिष्यभाव ॥ १४ ॥ तम स्तोम सोम गिलति वमतीवोडुनिकर रथाङ्गद्वन्द्वेऽस्मिन्नमरतटिनी खेलति मुहु । लतायामुत्कम्पो मदनवसतीकाञ्चनगिरिर्विपर्येति प्रायो रतिपतिमते सर्वमधुना ॥ १५ ॥ विहायसि विहारिणी भवतु नाम सौदामिनी सुमेरुशिखरादध पततु नाम मन्दाकिनी । पर तदिदमद्भुत यदयमेत्य भूमीतल नमन्ममृतदीधिति कमलसारमाकर्षति ॥ १६ ॥ प्रारब्धे रतिकेलिसङ्कुलरणारम्भे तया साहसप्राय कान्तजयाय किंचिदुपरि प्रारम्भि तत्सभ्रमात् । खिन्ना येन कटीतटी शिथिलिता दोर्वल्लिरुत्कम्पित वक्षो मीलितमक्षि पौरुषरस स्त्रीणा कुत सिध्यति ॥ १७ ॥ आलोलामलकावलीं सकुसुमा बिभ्रच्चलत्कुण्डल किंचिन्मृष्टविशेषक तनुतरै स्वेदाम्भस सीकरै । तन्व्या यत्सुरतान्ततान्तनयन वक्त्र रतव्यत्यये तत्त्वा पातु चिराय किं हरिहरब्रह्मादिभिर्दैवतै ॥ १८ ॥ प्रारब्धे विपरीतनामनि रते सर्वे तदाभूषणात्क्षामाङ्ग्या विपरीतमेव कुटिला मुक्ता सुवृत्ता अपि । मुक्ता निपतिता भवन्ति तरलास्तौ चापलौ चेद्बहु सीदन्ति श्रुतिपारगा सुमनस कान्ता नु कान्तायते ॥ १९ ॥ निशेषं व्यपनीय नीविवसन मञ्जुक्वणन्मेखल क्रीडादोलनखिन्नमध्यमतिक किंचित्प्रकम्पस्तनम् । उपलुण्ड

१ केशकलापरूप २ मुखरूप ३ कण्ठरूप ४ मुक्ताकलापरूप ५ त्रिवलिरूपा

१ धाराभि

लताण्डन च रुचिर विक्रम्य कान्तोपरि क्लान्ता वक्षसि कामिना मुकुलितप्रान्ताक्षिक शेरते ॥ २० ॥ प्रागलभ्य पुरु षायिते मम पुर पश्येति सनद्धया तन्व्या ताम्यदुरोजयापि सुचिरं विक्रम्य रम्य तया । श्रान्ता वक्षसि मे निपत्य च पुन सापत्रप सस्मित साकूत च समीक्षित मृगदृशा यच्च त्कथ कथ्यते ॥ २१ ॥

---

## सुरतनिवृत्तिः

सन्यासमकृत काञ्ची जही कलत्र दुकूलमबलाया । तत्याज रागमधरो मुक्तिमुरीचक्रिरे चिकुरा ॥ १ ॥ सुतनु श्रुतिसेवनतो मन्ये नयन निरञ्जन जातम् । मुग्धा स्नेहा-क्षवरी मुक्ता मुक्तिं कथ प्राप ॥ २ ॥ स्त्रिमालसनयनान्त स्त्रिमालिकलसकुन्तलस्तबकम् । वदनमलुप्ततिलक मदन नेदयति दवयति धृतिं मे ॥ ३ ॥ पपात मेरो सुरसिन्धु धारा ववर्ष तारागणमन्धकार । बभूव भृङ्गानलिरप्यकम्पा शशाम शम्पालतिकाविलास ॥ ४ ॥ पपात गङ्गा हरमौलि सङ्गादन्ध तमोभूतमपेतबन्धम् । तडिल्लता चञ्चलताम हासीदसन्दमासीदरविन्दयुग्मम् ॥ ५ ॥ कामसगरविधौ मृगीदृश प्रौढपौरुषधरे पयोधरे । स्वेदराजिरुदियाय सर्वत पुष्पवृष्टिरिव पुष्पधन्वन ॥ ६ ॥ सगतामिहचितैश्चलितापि प्रागमुच्यत चिरेण सखीव । भूय एव समगस्त रतान्ते ह्रीर्वधूभिरसहा विरहस्य ॥ ७ ॥ प्रेक्षणीयकमिव क्षणमास ह्रीविभङ्गुरविलोचनपाता । सम्भ्रमद्रुतगृहीतदुकूलच्छाय माननयुग सुरतान्ता ॥ ८ ॥ अप्रभूतमतनीयसि तन्वी काञ्चिधाम्नि पिहितैकतरोरु । क्षौममाकुलकरा विचकर्ष कान्तपल्लवममीष्टतमेव ॥ ९ ॥ मृष्टचन्दनविशेषकभक्तिश्लिष्ट-भूषणक्षर्दितमाल्य । सापराध इव मण्डनमासीदात्मनैव सुदृशामुपभोग ॥ १० ॥ योषित पतितकाञ्चनकाञ्ची मोह-नातिरभसेन नितम्बे । मेखलेव परित स्म विचित्रा राजते नखनखक्षतलक्ष्मी ॥ ११ ॥ भातु नाम सुदृशा दशनाङ्क पाटलो धवलगण्डतलेषु । दन्तवाससि समानगुणश्री सम्मुखो ऽपि परभागमवाप ॥ १२ ॥ सुभ्रुवामधिपयोधरपीठ पीडनैस्त्रुटितवत्यपि पत्यु । मुक्तमौक्तिकलघुर्गुणशेषा हार-यष्टिरभवद्गुरुरेव ॥ १३ ॥ विभ्रमार्थमुपगूढमजस्र यत्प्रियै प्रथमरत्यवसाने । योषितामुचितमन्मममादौ तद्वितीयसुरतस्य बभूव ॥ १४ ॥ आस्तृतेऽभिनवपल्लवपुष्पैरप्यनारततरामि-रताम्य । दीयते स्म शयितुं शयनीये न क्षण क्षणद यापि वधूभ्य ॥ १५ ॥ उपबर्हमम्बुजदृशो निज भुज विरचय्य वक्षसि गण्डमण्डले । विजसीम सनियमि निधाय सादरं स्वपिति सनातिकराम्बुजो युवा ॥ १६ ॥ करकिसलय धूत्वा धूत्वा विमार्गति वाससी क्षिपति सुमनोमालाशेषं प्रदीपशिखां प्रति । स्थगयति मुहु पत्युर्नेत्रे विहस्य समाकुला सुरतविरतौ रम्या तन्वी मुहुर्मुहुरीक्षते ॥ १७ ॥ सुरतविरतक्रीडाखेदश्रमस्थहस्तया रहसि गलित तन्व्या प्रातु न पारितमंशुकम् । रतिरसजडैरङ्गैरङ्गे पिधातु मशक्तया प्रियतमतनौ सर्वाङ्गीण प्रविष्टमधृष्टया ॥ १८ ॥ प्रियकृतपटस्तेयव्रीडाविलम्बनविह्वला किमपि कृपणालापा बाला विलोक्य ससम्भ्रम । अपि विचलिते स्कन्धावारे गते सुरताहवे त्रिभुवनमहाधन्वी स्थाने न्यवर्तत मन्मथ ॥ १९ ॥ शयानसोत्तान हृदि निहितवक्षोरुहभरा तिरश्चीने वक्त्रे निबिडकलितात्मीयरदना । समाक्रम्योरुभ्यामति-दृढतर सक्थियुगल स्वपित्यम्भोजाक्षी शिथिलभुजबन्धेय-मधुना ॥ २० ॥ मुख जृम्भारम्भि भ्रमरति मदामोदलहरी दृशोस्तन्द्राभार स्फुरति विगलत्यङ्गलतिका । स्वमेताद्वक्कान्ति क्रमञ्जुषि धन्यैव नितरामसौ धन्यो यस्ते सकलरजनीं जागरयिता ॥ २१ ॥ प्रियाया प्रत्यूषे गलितकबरीबन्धन विधावुदञ्चद्दोर्नालीदरदलितचेलाञ्चलयुर । धनाकूते पश्य-न्त्यथ मयि समन्दाक्षिवलित नमन्त्या यद्रूप नहि लिखितु-मीशो मनसिज ॥ २२ ॥ रतान्ते प्राणेशे वसनमददाने क्षणमपि स्थिताया याचन्त्या वितर मम चेल गुणनिधे । सरोष पश्यन्त्या किमपि च हसन्त्या परिचलन्नमन्त्या-स्तद्रूप न हि लिखितुमीशो मनसिज ॥ २३ ॥ शान्ते मन्मथ सगरे रणभुवा सत्काममातन्वती वासोऽदाज्जघनस्य पीन कुचयोर्हारं श्रुत कुण्डलम् । बिम्बोष्ठस्य च वीटिका सुनयना पाण्यो रणत्कङ्कणे पश्चाल्लम्बिनि केशपाशनिचये युक्तो हि बन्धक्रम ॥ २४ ॥ नेपथ्यादपि राजते हि नितरां व्यालुप्तभूषा तनु सभोगश्रममीलित विजयते चक्षु कटाक्षादपि । गाढालिङ्गनकौतुकादपि नव दोर्वल्लिविस्रसन प्रीत्यालापरसादपि प्रियतम मौन कुरङ्गीदृश ॥ २५ ॥ निर्वृत्ते सुरतोत्सवे बहुविधे जातेऽधिकेऽङ्गक्लमे तल्पे स्वेद-जलार्द्रचन्दनमये निश्चिद्रहीतेऽम्बरे । सान्द्रस्नेहवशाद्विशेष विषयव्यासङ्गजिह्मात्मनोर्दम्पत्यो स्मरपरवशतुरतया भूयोऽपि जाता स्पृहा ॥ २६ ॥ मुक्ताभूषणानि दुबिम्बमजनी व्यापीप तारे नभ स्मारं चापमपेतचापल्यमभूदिन्दीवर मुद्रित । व्यालीन कलकण्ठकण्ठनिनदैर्मन्दानिलैर्मन्दित निष्कम्प स्तबकानि चक्रदलना माभूत जातोऽथ किम् ॥ २७ ॥ नीवी सदमन कचे नियमन श्रोणीतले चालन नि श्वास स्पन्दन मुखे ममम सत्याद्दतिर्भूषणे । ध्यान प्रेमणि धारा मन्ननटे तन्व्या समापि प्रिये निर्वेदादिव किं रतान्तमुत्सवा स्वाङ्गस्योत्सवः ॥ २८ ॥ निर्वैरौ कुचकुम्भौ कथ

मरस्तत्याज बन्ध ययौ काञ्ची निर्गुणता निरञ्जनदशा दृग्भ्या समासादिता । नीरागोऽधरपल्लवश्च गुरुणा केनापि गौराङ्गि ते शङ्के शम्बरशासनोपनिषदा तत्त्वावबोध कृत ॥ २९ ॥ तन्द्रातुन्दिलशोणलोचनयुग दत्ताङ्कदन्तच्छद पर्यस्तालकवल्लि घर्मपटलप्रोद्भिन्नपत्रावलि । जृम्भोज्जृम्भित-सीधुसौरभमिलद्भृङ्गीभिरङ्गीकृतस्तोत्र शसति वृत्तमेन रजनी-वृत्तान्तमेणीदृश ॥ ३० ॥ स्वामि भङ्गुरयालक सतिलक भाल विलासि कुरु प्राणेश त्रुटित पयोधरतटे हार पुन र्योजय । इत्युक्त्वा सुरतावसानसमये सपूर्णचन्द्रानना स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम् ॥ ३१ ॥ व्यालोल केशपाशस्तरलितमलकै स्वेदलोलौ कपोलौ क्लिष्टा बिम्बाधरश्री कुचकलशरुचा हारिता हारयष्टि । काञ्ची काचिद्गताशा स्तनजघनपद पाणिना छादयन्ती भूपाहीनापि काचित्प्रियहृदयमहो प्रीणयत्येव मुग्धा ॥३२॥ सव्यासव्यो रवाहुव्यतिकरमधुर कूर्परन्यस्तशीर्षे ससक्तास्याब्जयुग्मश्वसित-हृतचलचारुनासाविभूषम् । भूयो निद्रातिरेकात्क्रमशिथिल-भुजाश्लेषदत्तावकाशोच्छ्वासोदश्चत्कुचाग्रप्रतिहतहृदय शेरतेऽमी रतान्ते ॥ ३३ ॥ व्यामिश्रैकैकबाहु प्रचलितपृथुलैकैकचारू-रुकाण्ड दष्ट्वा दष्टाधरोष्ठ दरशिथिलतनुश्लेषमालिङ्ग्य कान्ता । शश्वन्नि श्वासवेगस्फुरितगुरुकुचद्वन्द्वसघृष्टवक्षा श्रान्त शेते रतान्ते सुखमिह सुकृती लीलया कामिलोक ॥ ३४ ॥

## चन्द्रास्तसमयवर्णनम्

कलङ्कदाशो गगनाम्बुराशौ प्रसार्य चन्द्रातपतन्तुजालम् । लग्नोडुमीनाँल्लघु सजिघृक्षुश्चन्द्रप्लवस्थश्चरमाब्धिमेति ॥ १ ॥ असौ हि दत्त्वा तिमिरावकाशमस्त व्रजत्युन्नतकोटिरिन्दु । जलावगाढस्य वनद्विपस्य तीक्ष्ण विषाणाग्रमिवावशिष्टम् ॥ २ ॥ धृ्तेन तारावलितण्डुलानामङ्केन च श्रीफलपल्लवेन । अभ्यर्च्य जामेश्वरमिन्दुबिम्ब विसर्जयत्येष नभोमुनीन्द्र ॥ ३ ॥ मन्दममिमैर्धुर्यैर्मोपला दर्शितैश्वयथु चामनत्तम । दृष्ट्यस्तिमिरज सिषेविरे दोर्षमोषधिपतेरसनिधौ ॥ ४ ॥ अरुणकिरणजालैरन्तरिक्षे गतर्क्षे चलति शिशिरवाते मन्द-मन्द प्रभाते । युवतिजनकदम्बे नाथमुक्तौष्ठबिम्बे चरम गिरिनितम्बे चन्द्रबिम्ब ललम्बे ॥ ५ ॥ जरठ इव मरालो जर्जरामैर्मयूखै स्खलति शिशिरभानु पश्चिमाम्भोधिपारे । क्षयगरत इवाभूत्तत्र तत्रान्तरिक्षे विरलविरलभास किं च तारा लुठन्ति ॥ ६ ॥ चरमगिरिपुरन्ध्रीचक्रकण्डूयनेन

१ शिवम् २ मन्दीभूतमग्निम्, पक्षे,–रोगविशेष ३ धृतवन्त ४ मृतकान्ता ५ पुष्टवम्, पक्ष–रोगविशेष– ६ आन्ध्यम्, पक्षे,–रोगविशेष ७ चन्द्रस्य; पक्षे–वैद्यस ८ इव

स्वपिति सुखमिदानीम तरिन्दो कुरङ्ग । परिणतरविगर्भ-व्याकुला पौरुहूती दिगपि घनकपोतीहुङ्कृतै कुप्यतीव ॥ ७ ॥ उदयमुदितदीप्तिर्याति य सगतौ मे पतति न वर-मिन्दु सोऽपरामेष गत्वा । स्मितरुचिरिव सद्य साभ्यसूय प्रभेति स्फुरति विशदमेषा पूर्वकाष्ठाङ्गनाया ॥ ८ ॥ नव कुमुदवनश्रीहासकेलिप्रसङ्गादधिकरुचिरशेषामप्युषा जाग रित्वा । अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्त शिशयिषुरिव पाण्डुम्लानमात्मानमिन्दु ॥ ९ ॥ सपदि कुमुदिनीभि र्मीलित हा क्षपापि क्षयमगमदपेतास्तारकास्ता समस्ता । इति दयितकलत्रश्चिन्तयन्नङ्गमिन्दुर्वहति कृशमशेष भ्रष्टशोभ शुचेव ॥ १० ॥ प्रकटमलिनलक्ष्मा मृष्टपत्रावलीकैरधिगत रतिशोभै प्रत्युषप्रोषितश्री । उपहसित इवासौ चन्द्रमा कामिनीना परिणतशरकाण्डापाण्डुभिर्गण्डभागै ॥ ११ ॥ विकसितमुखीं रागासङ्गाद्गलत्तिमिरावृतिं दिनकरकरस्पृष्टा मैन्द्रीं निरीक्ष्य दिश पुर । जरठलवलीपाण्डुच्छायो भृश कलुषान्तर श्रयति हरित हन्त प्राचेतसीं तुहिनद्युति ॥ १२ ॥ नक्षत्रक्षितिनायकोऽयमधुना रुद्ध प्रमातागमे ससाश्वेन बलीयसातिमहसा रोषारुणज्योतिषा । भ्रश्यद्भ्रान्त-शिरोरुहा प्रविगलत्तारालिहारावलीमादाय क्षणदा प्रिया क्षितिधर पाश्चात्यमारोहति ॥ १३ ॥ सश्लिष्य सानुराग स्वकरपरिचयप्राप्तभूरिप्रसादा या पूर्वा मुक्तपूर्वा रविकर-कलिता तामुदीक्ष्यामृतांशु । निस्तेजा पश्चिमाब्धौ प्रविशति हि सता दु सहो मानभङ्ग किं वक्तव्य सिताशो स तु सकलसता मण्डलस्यापि नेता ॥ १४ ॥

## मध्यरात्रक्रीडावर्णनम्

शमितनिखिलदीपे सुप्तनिद्रालुलोके रतपरवशचित्ता मध्यरात्रे विबुद्धा । प्रथमसुरतखिन्ना मुग्धिका बोधयन्तो बहुदृढपरिरम्भै कामुका खेदयन्ति ॥ १ ॥ अनुनयम गृहीत्वा व्याजसुप्ता पराची रुतमथ कृकवाकोस्तारमाकर्ण्य कल्ये । कथमपि परिवृत्ता निद्रयान्धा किल स्त्री मुकुलित नयनैवाश्लिष्यति प्राणनाथम् ॥ २ ॥ चिररतिपरिखेदप्राप्त-निद्रासुखाना चरममपि शयित्वा पूर्वमेव प्रबुद्धा । अपरि चलितगात्रा कुर्वते न प्रियाणामशिथिलभुजचक्राश्लेषभेद तरुण्य ॥ ३ ॥ वदनशशिन सर्खे शीतादिवागतवेपथु स्तनयुगलके भ्रान्त्या तुङ्गे निविष्ट इव भ्रमात् । ज्वलित मदनागारे तन्व्यास्ततो जघनस्थले सपुलकजल पत्यु पाणिर्विलीन इवाभवत् ॥ ४ ॥ रतिकृति गते मायानिद्रा

१ सुखहस्तलम्मम् २ चन्द्र– ३ नक्षत्राणाम्, पक्षे,–द्विजानाम् ४ नायक ५ निर्लज्जुवती ६ प्रभाते

प्रवर्तितचुम्बना पुलकप्रचयगा तत्र गत्वा मुग्धादृतानना । कृतकशयनो निमीलाक्षोऽसीत्युदीर्य कश्चिद् वधूर्भणितमधरं कृत्वा दन्तैरपूरयत स्पृहाम् ॥ ५ ॥

---

## प्रभातवर्णनम्

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी । दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥ १ ॥ कुक्कुटे कूजति क्षणमात्रं श्लिष्टयोस्तयोः । दिवाकरकराक्रान्तं शशिकान्तमिवापयौ ॥ २ ॥ विकसितसङ्कुचितपुनर्विकसत्स्वम्बुजेषु दुर्लक्ष्या । कलिकाः कथयति नूतनविकासिनीर्मधुलिड्भ्रमर्यः ॥ ३ ॥ प्रियतमसतेरपयान्त्यो मिथः करम्बितकराम्बुजमात्रम् । करजपदव्रणविरलसत्पुलकममूः किमपि निवदन्ते ॥ ४ ॥ आश्लेषशेषा रतिरङ्गनानामोदशेषा कुसुमस्रगथी । तूणीरशेषः कुसुमायुधोऽपि प्रभातशेषा रजनी बभूव ॥ ५ ॥ नभोवनान्तमसौ निशान्ते नक्षत्रसेनासहितः शशाङ्कः । करामलन्यस्तकतिचित्प्रहस्य पाथा प्रभाते प्रपलायतेऽथ ॥ ६ ॥ चन्द्रकान्तगलदम्बुनाधुना हा चकोरनयने समाश्रिते । कोकशोकहृदयानलः पुनः सूर्यरत्नमणिमाश्रयत्यहो ॥ ७ ॥ सन्निगूह्य चिकुरे तमोमयं यामिनी तदनु केलिविच्युतम् । कुर्वती श्रवसि चन्द्रमण्डलं कुण्डलं गगनकेलिमुञ्झति ॥ ८ ॥ तरुणीं दिवाकरमयूखमञ्जरीमरुणामशोकशिखरावलम्बिनीम् । कमनीयपुष्पमनसा समाश्रितां मधुपो विडम्बयति मञ्जुभाषिणीम् ॥ ९ ॥ प्राची दिगम्बरमणौ दयिते विभाते प्राप्तेऽम्बरं स्पृशति तारकसञ्जिकेयम् । धीरा जगाद रमणस्य न भूषणानि रोषारुणा त्यजति तारकभूषणानि ॥ १० ॥ यात्येकतोऽस्तशिखरं पतिरोषधीनामाविष्कृतारुणपुरःसर एकतोऽर्कः । तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां लोको नियम्यत इवैष दशान्तरेषु ॥ ११ ॥ अन्तर्हिते शशिनि सैव कुमुद्वतीयं दृष्टिं न नन्दयति संस्मरणीयशोभा । इष्टप्रवासजनितान्यबलाजनस्य दुःखानि नूनमतिमात्रसुदुःसहानि ॥ १२ ॥ प्रालेयमिश्रमकरन्दकरालकोशैः पुष्पैः समं निपतिता रजनी प्रबुद्धे । अर्कांशुभिन्नमुकुलोदरसान्द्रगन्धसंसूचितानि कमलान्यलयः पतन्ति ॥ १३ ॥ दिग्मण्डलीमुकुटमण्डनपद्मरागरत्नाङ्कुरे किरणमालिनि गर्भस्थेऽपि । सौख्यप्रसुप्तिकमधुव्रतचक्रवालचापल्यदुःखजननी सरगाः सरस्सु ॥ १४ ॥ पीत्वा भृशं कमलकुड्मलशोणकोणा दोषातनीं तिमिरवृष्टिमिव स्फुटन्त । निर्यन्मधुव्रतमिषादुद्वमतीव बिभ्रति कारणगुणानिव मौक्तिकानि ॥ १५ ॥ आसन्नेऽमरमनकुरितैर्मयूखैः प्रथमशैलविहारिणीनाम् । सोऽयं करोति कुसुमायुधसुन्दरीणां कर्णेषु कल्पतरुपल्लवभङ्गलक्ष्मीम् ॥ १६ ॥ अन्यत्र यापितनिशं परिलोहिताक्षमायान्तमागतमिवागतमुष्णरश्मिम् । प्रातर्निरीक्ष्य कुपितेव हि पद्मिनीयमुत्फुल्लकोकनदलोहितलोचनाभूत् ॥ १७ ॥ या कामला निधुवनश्रमपीडिताङ्गी निद्रां गता दयितबाहुलतानुबद्धा । सा सा तु यातु भवनं मिहिरोद्गमोऽयं सङ्केतवाक्यमिति काकवधूर्वदति ॥ १८ ॥ दिशि दिशि मृगयन्ते वल्गुना वामनेत्रे मुहुरपगतनिद्राः संसयो हेषितेन । अयमपि च सरोषं कामिभिः श्रूयमाणो नदति मधुरतारं ताम्रचूडो विहङ्गः ॥ १९ ॥ अविरतमभिरामा गणिकाः सर्वरात्रं रतिविधुरालीला कौतुकेनाभिवीक्ष्य । इदमुदयशितानामस्फुटालोकवत्सप्रयाणमिव सान्द्रं पूर्णते दीपमार्गे ॥ २० ॥ रतिरभसविलासाभ्यासतान्तं न यावन्नयनयुगममीलत्तावदेवाहतोऽसौ । रजनिविरतिशंसी कामिनीनां भविष्यद्विरहविहितनिद्राभङ्गमुच्चैर्मृदङ्गः ॥ २१ ॥ अहरकमनीयं स निद्राहतोऽर्थं प्रतिपदमुपहूतः केनचिज्जागृहीति । मुहुरविशदवर्णां निद्रया शून्यशून्यां ददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥ २२ ॥ विपुलतरनितम्बाभोगरुद्धे रमण्याः शयितुमनधिगच्छञ्जीवितेशोऽवकाशम् । रतिपरिचयनश्यन्नैद्रतन्द्रः कथंचिद्गमयति शयनीये शर्वरीं किं करोतु ॥ २३ ॥ द्रुततरकरदक्षाः क्षिप्तवैशाखशैले दधति दधनि धीरमारवान् वारिणीव । शशिनमिव सुरौघाः सारमुद्धर्तुमेते कलशिमुदधिगुर्वीं बल्लवा लोडयन्ति ॥ २४ ॥ परिशिथिलितकर्णग्रीवमामीलिताक्षः क्षणमयमनुभूय स्वप्नमूर्ध्वज्ञुरेव । रिरसयिषति भूयः शष्पमग्रे विकीर्णं पटुतरचपलौष्ठः प्रस्फुरत्प्रोथमश्वः ॥ २५ ॥ कृतधवलिमभेदैः कुङ्कुमेनेव किंचिन्मलयरुहरजोभिर्भूषयन् पश्चिमाशाम् । हिमरुचिररुणिम्ना राजते रज्यमानैर्जरठकमलकन्दच्छेदगौरैर्मयूखैः ॥ २६ ॥ शिशिरकिरणकान्तं वासरान्तेऽभिसार्य श्वसनसुरभिगन्धिं साम्प्रतं सत्वरेव । व्रजति रजनिरेषा तन्मयूखाङ्गरागैः परिमलितमनिन्द्यैरम्बरान्तं वहन्ती ॥ २७ ॥ व्रजति विषयमक्ष्णामंशुमाली न यावत्तिमिरमखिलमस्तं तावदेवारुणेन । परपरिभवि तेजस्तन्वतामाशु कर्तुं प्रभवति हि विपक्षोच्छेदमग्रेसरोऽपि ॥ २८ ॥ विगततिमिरपङ्कं पश्यति व्योम यावद्धुवति विरहखिन्नः पक्षती यावदेव । रथचरणसमाह्वस्तावदौत्सुक्यनुन्ना सरिदपरतटान्तादागता चक्रवाकी ॥ २९ ॥ अम्भोजन्ध्यराजीगुम्फहृन्मापदाना बद्धमधुपमाला जलेन्दीवराक्षी । अनुसरति शिवे पद्मिनी व्याहरन्ती रजनिमविरजाना पूर्वसन्ध्या सुखेन ॥ ३० ॥ अयमुदयमहीभृन्मूर्ध्नि पाणिं गृहीत्वा दिवसविरहखेदी

१ भव. २ दर्पं करोति ३ कुकुर- ४ कर्णमनु-

दिन्दुपादान्हवींषि । अरुणकिरणवह्नौ कन्यका पौरुहूती हरिदपि किमकार्षीत्तारकालाजहोमम् ॥ ३१ ॥ कुमुदवनमपश्रि श्रीमदम्भोजखण्ड त्यजति मुदमुलूक प्रीतिमांश्चक्रवाक । उदयमहिमरश्मिर्याति शीतांशुरस्त हतविधिलसितानां ही विचित्रो विपाक ॥ ३२ ॥ लुलितनयनतारा क्षामवक्त्रेन्दुबिम्बा रजनय इव निद्राक्रान्तनीलोत्पलाक्ष्य । तिमिरमिव दधाना स्रंसिन केशपाशानवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्व ॥ ३३ ॥ शिथिलयति सरागो यावदर्को नलिन्या कमलमुकुलनीवीमग्रिमग्रन्थिमुद्रा करेण । प्रविकसदलिमाला गुञ्जितैर्मञ्जुशब्दा जनयति मुदमुच्चै कामिना कामिनीव ॥ ३४ ॥ नमसि विरलतारा मौक्तिकानीव भान्ति स्फुटतरमयमस्तक्ष्माधर चुम्बतीन्दु । रविरुदयधरित्रीधारिमूर्धानमेतु हृदयमनु नितान्तोल्लासमङ्गीकरोति ॥ ३५ ॥ अभूत्प्राची पिङ्गा रसपतिरिव प्राश्य कनक गतच्छाय श्चन्द्रो बुधजन इव ग्राम्यसदसि । क्षणात्क्षीणास्तारा नृपतय इवानुद्यमपरा न दीपा राजन्ते द्रविणरहितानामिव गुणा ॥ ३६ ॥ इत शुक्ला चन्द्रद्युतिभिरिह रक्तारुणकरैस्तमिस्रैरप्य त स्खलितगतिभिर्मेचकरुचि । प्रभातश्रीरेषा विलसति पुरस्या सुकृतिना मिमङ्क्ष्णा जह्नुयुमणिविधिजासगम इव ॥ ३७ ॥ तमोभि पीयन्ते गतवयसि पीयूषवपुषि ज्वलिष्यन्मार्तण्डोपलपटलधूमैरिव दिश । सरोजाना कर्षज्वलिमयमयस्कान्तमणिवत्क्षणादन्त शल्य तपति पतिरद्यापि न रुचाम् ॥ ३८ ॥ इत पौरस्त्याया ककुभि विवृणोति क्रमदलत्तमिस्रामर्माण किरणकलिकामम्बरमणि । इतो निष्क्रामन्ती नवरतिगुरो प्रोञ्छति वधू स्वकस्तूरीपत्राङ्कुरमकरिकामुद्रितमुर ॥ ३९ ॥ द्रुमा पाण्डुप्राया धृतनिबिडगर्भा स्त्रिय इव प्रफुल्लास्ते कन्दा नृपतिकृतमाना इव जना । पिको मन्द मन्द हृदि मदननामानि जपति प्रमोरम्भे पूर्वपरिचितसमाक कविरिव ॥ ४० ॥ विरलविरलीभूतास्तारा कली सुजना इव व्यपसरति च ध्वान्त चित्तात्सतामिव दुर्जन । मन इव मुने सर्वत्रापि प्रसन्नमभूत्तमो विगलति निशा क्षिप्र लक्ष्मीरनुद्यमिनामिव ॥ ४१ ॥ व्रजत्यपरवारिधिं रजतपिण्डपाण्डु शशी न भान्ति जलबुद्बुदद्युतिसपत्निकास्तारका । कुरण्टकविपाण्डुरं दधति धाम दीपाङ्कुराश्चकोरनयनारुणा भवति दिक्च सौत्रामणी ॥४२॥ अथ मृदुमृणालिनीनवविलासनैहासिकस्तिनपा वितपते पति सपदि दस्यमाना निजा । स्तनौ पुलकयन्ति चोत्पलदृशा प्रियोर स्थले विपर्ययितवृत्तयो घुसृणपङ्कपत्राङ्कुरा ॥ ४३ ॥ जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टैर्हस्तैर्भानोर्नृपतय इव स्पृश्यमाना विबुद्धा । स्त्रीभि सार्धं घनपरिमलस्तोकलक्ष्याङ्गरागा मुञ्चन्त्येते विकचनलिनीगर्भशय्या द्विरेफा ॥ ४४ ॥ य सैन्ये स्मरपार्थिवस्य विरहिप्रत्यर्थिनामग्रणीज्योंत्स्नानिर्झरमुज्झति स्म जगता यस्तापनिर्वापणम् । सोऽयं तारकनायक किमपरं शृङ्गारसंजीवन जात पुष्पपरागपाण्डुरजरत्कूष्माण्डपिण्डाकृति ॥ ४५ ॥ ये कुण्ठीकृतवल्लभप्रणतय शश्वैरनङ्गस्य ये न प्राप्ताश्च निशीथिनीपतिकरै शैथिल्यवीथीमपि । ते नि शङ्कविटङ्कताम्रचुमुलप्रोतप्लुतप्लावितैश्छिन्ना कुक्कुटकूजितैर्मृगदृशा मानमहग्रन्थय ॥४६॥ कान्ते जग्मुषि ताम्रचूडरटित श्रुत्वा प्रबुद्धा जवात्किचिद्रीसवदिष्मुख प्रविकसद्दृष्ट्वा गवाक्षाध्वना । सत्रासेन समीरिता प्रियतमप्रेम्णावरुद्धा शनैरुत्थानोपनिवेशनानि कुरुते तल्पे मुहु पांसुला ॥ ४७ ॥ निर्यान्त्या रतिवेश्मन परिणतप्राया विलोक्य क्षपा गाढालिङ्गनचुम्बनानि बहुश कृत्वाप्यसंतुष्टया । एक भूमितले निधाय चरण तल्पे प्रकल्प्यापर तन्वङ्ग्या परिवर्तिताङ्गलतया प्रेयाश्चिरं चुम्बित ॥ ४८ ॥ पद्मिन्या सकला विधाय विकलां ताराधिप सपद तत्प्रेयस्युदयोन्मुखे सति रवावुद्धिमतामाश्रित । तारा स्वस कैरवैर्विकृष्य सहसा गच्छन्नितोऽस्ताचल लग्ना काश्चन ता प्रभाकरकरे पश्यन्परिम्लायति ॥ ४९ ॥ एते केतकधूलिधूसररुच शीतद्युतेरंशव प्राप्ता संप्रति पश्चिमस्य जलधेस्तीर जराजर्जरा । अप्येते विकसत्सरोरुहवनीदक्पातसभाविता प्राचीरागमुदीरयन्ति तरणेस्तारुण्यभाज करा ॥ ५० ॥ सद्य सघटमानकोकमिथुनव्याजेन पीनस्तनद्वन्द्वव्यञ्जितयौवनोज्ज्वलरुचो निर्माय दिक्कन्यका । दुर्दैवाक्षरमालिकामिव झटित्याकृष्य भृङ्गावलीं लक्ष्मीमम्बुजिनीजनस्य तनुते देवस्त्विषामीश्वर ॥ ५१ ॥ उन्मीलन्ति निशानिशाचरवधूत्योच्चाटनामान्त्रिकाय सालससुप्तपङ्कजवनप्रोद्बोधवैतालिका । फुल्लत्पङ्कजकोशगर्भकुहरप्रोद्भूतभृङ्गावलीझङ्कारप्रणवोपदेशगुरवस्तीव्रद्युते रश्मय ॥ ५२ ॥ एतत्तर्कय चक्रवाकसुदृशामाश्वासनादायिन प्रौढध्वान्तपयोधिमग्नजगतीदत्तावलम्बोत्सवा । दीप्तांशोर्विकसन्ति दिङ्मृगदृशा काश्मीरपङ्कोदकव्यैस्तुक्षीचतुप

१ गगनहोमम् २ घूक ३ चञ्चलनयनकनीनिका ४ क्षाम कृशो षकेन्दुमण्डलं यासां ता ५ शिथिलान् ६ राजगृहेभ्य ७ वाराङ्गना ८ पारद ९ वधोगरहिता १० रौप्यगोलकवत्पाण्डुर ११ ऐन्द्री प्राचीत्यर्थ -

१ राज्ञाम् २ श्रेष्ठ अग्रेसर इत्यर्थ ३ ज्योत्स्नाप्रवाहम् ४ शृङ्गाररस जीवनौषधम् ५ जीर्ण ६ कुक्कुटारावम् ७ संभ्रमेण ८ प्राचीमुखम् ९ स्वैरिणी १० निर्गच्छन्त्या ११ केलिमन्दिरात् १२ प्रभातप्रायाम् १३ रात्रिम् १४ निधाय १५ वलिताङ्गवल्लिर्यया सा १६ प्रियतम १७ हीनाम् १८ शोभाम् १९ सिन्नत्वम २० किरणै २१ जलेन परस्पराभ्युक्षणरूपा क्रीडा

मपाकरोति । भूयोऽभिलाषजननी पुनरन्यथैव खेदापनोदनकला मलयानिलस्य ॥ १३ ॥ विकचकमलगन्धैरन्धयन्भृङ्गमाला सुरभितमकरन्द मन्दमावाति वात । प्रमदमदनमाद्यद्यौवनोद्दामरामारमणरभसखेदस्वेदविच्छेददक्ष ॥ १४ ॥ स्तनपरिसरभागे दूरमावर्तमाना स्फुटतनिमनि मध्ये किंचिदेव स्खलन्त । बबुरलघुनितम्बाभोगरुद्धा वधूना निधुवनरसखेदच्छेदिन प्राह्णवाता ॥ १५ ॥ दरविगलितमल्लीवल्लिचञ्चत्परागप्रकटितपटवासैर्वासयन्काननानि । इह हि दहति चेत केतकीगन्धबन्धु प्रसरदसमबाणप्राणवद्गन्धवाह ॥ १६ ॥ सललितमलकाना वल्लरी र्नर्तयन्तो मधुसुरभिमुखाब्जोच्छ्वासगन्धानुबन्धा । नवतररतभाजा योषिता स्वेदबिन्दून्सतृष इव पिबन्तो वान्ति मन्द समीरा ॥ १७ ॥ उषसि मलयवासी जालमार्गप्रविष्टो विकचकमलरेणु व्याकिरन्मोहचूर्णम् । सपदि शमितदीपो वायुचोरो वधूना हरति सुरतखेदस्वेदमुक्ताफलानि ॥ १८ ॥ कुसुमपरिमलेनामोदितालिर्लताना वलितकिसलयाना लास्यलीलोपदेष्टा । लुलितकमलवृन्द शीकरासारवोढा मृदुमलयसमीरो वाति वैभातिकोऽयम् ॥ १९ ॥ विलुलितकमलौघ कीर्णवल्लीवितान प्रतिवनमवधूताशेषशाखिप्रसून । क्वचिदयमनवस्थ स्थास्नुतामेति वायुर्वधूकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु ॥ २० ॥ पुरातनपरीमलप्रकरमेदुरा मारुता न वान्ति मुकुलीभवत्कुसुदगर्भलीना इव । चरन्ति नवसौरभा पुनरमी समीराङ्कुरा सजृम्भणसरोजिनीसरसिजात्समुत्का इव ॥ २१ ॥ अमी तटसमीपनिर्झरतरङ्गरिङ्गत्पयोजडीकृतपटीरभूरुहकुटीरसंचारिण । मनो विधुरयन्ति मे मलयमेखलामेदुरादुरासदवनप्रियप्रियतमारुता मारुता ॥ २२ ॥ लताकुञ्जे गुञ्जन्मदवदलिपुञ्ज चपलयन्समालिङ्गन्नङ्ग द्रुततरमनङ्ग प्रबलयन् । मरुन्मन्द मन्द दलितमरविन्द तरलयन्रजोवृन्द विन्दन्किरति मकरन्द दिशि दिशि ॥ २३ ॥ अनन्यक्षुण्णश्रीर्मलयवनजन्मायमनिलो निपीय स्वेदाम्बु स्मरमकरसमुक्तविभवम् । विदर्भाणा भूरि प्रियतमशरीरम्भरभसप्रसङ्गादङ्गानि द्विगुणपुलकासञ्जि तनुते ॥ २४ ॥ वृथा धूलीधारा परिकिरसि वाला प्रथयसे नवावेग कोऽयं पवन तव हा नन्वसमये । रतान्तश्रान्ताभि स्तिमितनयनान्ताभिरनिश स्तनौ यत्कान्ताभिर्न सुलभनर क्वापि च भवान् ॥ २५ ॥ वारंवार धुनत्कुसुमितारण्यरेवातटे वा सेनापुण्य परिणतमिद तारक तर्कयामि । यत्त्वा मत्वान्तिकमुपगतं कामगानाभिरामा रामा सैरं कुचकलशनो वक्षमुत्सारयति ॥ २६ ॥ चूतश्रेणीपरिमलमुपघ्नमञ्जरीकानुयाता भूयो भूय कुवल्यकुटीकोटरे लीयमाना । मन्द मन्द सुरतविरतौ वान्ति सीमन्तिनीना गण्डाभोगश्रमजललवग्राहिणो गन्धवाहा ॥ २७ ॥ रामाणा रमणीयवक्त्रशशिन स्वेदोदबिन्दुप्लुतो व्यालोलालकमञ्जरी प्रचलयन्धुन्वन्नितम्बाम्बरम् । प्रातर्वाति मधौ प्रकामविकसद्राजीवराजीरजपुञ्जामोदमनोहरो रतिरसग्लानिं हरन्मारुत ॥ २८ ॥ उल्लिखत्कुसुमासवै कुमुदिनीं रोजप्रिया पुष्पिणीमालिङ्गन्निशि निर्भयं परिचय कुर्वन्पुन पैङ्कजै । यावत्पङ्कजसौरभसवनखिल गृह्णँल्लघु प्रस्थितस्तावत्कैरव उपस्थिते मरुदय निम्न्रमयाद्धावति ॥ २९ ॥ अधोत्सङ्गवसद्भुजगकवलक्लेशादिवेशाचलप्रालेयप्लवनेच्छयानुसरति श्रीखण्डशैलानिल । किं च स्निग्धरसालमौलिमुकुलान्यालोक्य हर्षोदयादुन्मीलन्ति कुहू कुहूरिति कलोत्तालाः पिकाना गिर ॥ ३० ॥ नारीणा मृगनाभिकुङ्कुमरसप्रक्षालनश्यामगात्रसभोगश्रमशीकरान्परिहरन्नाकम्पयन्कुन्तलान् । पुष्पामोदमनोरमान्विगलितानम्भोजगन्ध वहन्प्रातस्त्य पवनो वहत्ययमलं स्वान्तप्रमोदप्रद ॥ ३१ ॥ प्रात सीमन्तिनीना निधुवनलुलितान्स्रंसयन्केशपाशानुन्मीलत्पङ्कजान्त परिमलसुरभि स्मारयन्कामलीला । स्वच्छावश्यायबिन्दून्दिशि दिशि विकिरन्स्थूलमुक्ताफलाभान्धूलीभि केतकीना धवलितभुवनो वाति मन्दं नभस्वान् ॥ ३२ ॥ धुन्वानाश्चन्दनाली बकुलमुकुलजा धूलिमुद्धूलयन्तश्चुम्बन्तश्चूतयष्टी परिमलबहुलाश्चम्पकान्कम्पयन्त । आपदारामसीमातटघटितघटीयन्त्रनिर्मुक्तवारा धारामाधारयन्त श्रमशमपटवो वान्त्यमी गन्धवाहा ॥ ३३ ॥ कुप्यत्केरलकेशबाहुप्रकरनियमिताशेषलेखाम्बुजाक्षीशापक्षीणा क्षरन्त क्षणपरिकलिता केकिना कामिनीभि । कार्णाटीनामकाण्डे मृगमदमसृण केशपाशं स्पृशन्त पम्पासपातलम्पा मलयजमरुतो जातकम्पा पतन्ति ॥ ३४ ॥ कृत्वा कार्णाटकान्ताकुचकनकगिरिप्रान्तसंचारलीला कम्पामासाद्य पम्पापयसि वनभुवि क्षिप्तमल्लीरजस्का । आकर्षन्त पुरस्तान्निगडमिव कलध्वानपुष्पन्धयाली धावन्त्येते मदान्धा मदननरपतेः सिन्धुरा गन्धवाहा ॥ ३५ ॥ एते पाटीरवाटीनवविटपनटीलास्यशिक्षातिदक्षा दोलाखेलत्पुरन्ध्रीश्रमजलकणिकाजालपातिप्रतानाः । सौरभ्यादापतद्भिर्मधुकरपटलै पृष्ठतोऽनुप्रयाता वामाभे स्मारधाम्न्या पथिककुलवधूबद्धवैरा समीरा ॥ ३६ ॥ एष क्रीडान्तताम्यत्कुसुमपुरवधूवक्त्रसौरभ्यवद्धुर्गन्धनिद्राजडाना रसितमनुसरो द्रोघयन्सारसानाम् । आबाल्य

---

१ मत्त-. पक्षे,-सं(क-. २ चन्द्रमियान्. पक्षे-कृन्तमियान्. ३ पुष्पगुल्मम्. पक्षे,-रजस्वलाम्. ४ निम्नदेः. पक्षे,-विटैः. ५ पङ्कजसौरभ कमलमौल्स्लदेव स धनम्. ६ सत्वरम्. ७ प्रभाते. ८ अभिमल्लनकृत्. ९ प्रमरयन्.

पुर स्थाप्यते ॥ २३ ॥ मञ्जिष्ठारुणदीधितिर्मधुकरैर्माङ्गल्यगीतिस्तत कोकाह्लादपटु सरोरुहवन प्रीत्या समुज्जृम्भयन् । लोकालोककर करैश्च तमसा स्तोम समुत्सारयन्नारोहत्युदयाचल रविरय बन्धूकगुच्छच्छवि ॥२४॥ कीलालै कुङ्कुमाना सकलमपि जगज्जालमेतन्निषिक्त मुक्ताश्रोमत्तभृङ्गा विघटितकमलक्रोडकारागृहेभ्य । उत्सृष्ट गोसहस्र किमुत कलकल श्रूयते च द्विजाना मार्गैर्द्वारकाणा हरिद्दयहरिता सूयते पुनरवम् ॥ २५ ॥

## नायिकानिर्गमनम्

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपद पराप्ते । श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा ॥ १ ॥ गुरुत्रासादासादितमनदुपालम्भवचसा मुहु स्मार स्मार कथमपि निशीथे समगमम् । इदानीं मुग्ध त्व दयित पुनरेष्यामि समभूदुष कालीनोऽय चटुलचटकालीकलकल ॥ २ ॥ प्रवुद्धाया प्रातर्लसदलसदोर्वल्लिवलय गलन्मल्लीदाम्न शिथिलकबरीबन्धसमये । प्रियालोके घूर्णन्नयनमसृणस्मेरमधुरो मुखे जृम्भारम्भी जयति भृशमिन्दीवरदृश ॥ ३ ॥ प्राणेशेन प्रहितनखरेष्वङ्गकेषु क्षपान्ते जातातङ्का रचयति चिर चन्दनालेपनानि । धत्ते लाक्षामसकृदधरे दन्तदन्तावघाते क्षामाङ्गीय चकितमभितश्चक्षुषी विक्षिपन्ती ॥ ४ ॥ धम्मिल्ल परिबध्नती नखमुखै सीमन्तमातन्वती पश्यन्ती नखरोत्सव कुचयुगे सव्यापसव्य मुहु । नाभीसीमनि कुञ्चिताङ्गुलिदल नीवीभर रुन्धती शय्यागारविनिर्गतापि हृदयाघ्रायापि निष्क्रामति ॥५॥ एषा का मुक्तमुक्ता विलुलितवसना स्वेदलम्नान्तवस्त्रा प्रत्यूषे याति बाला मृग इव चकिता सर्वत शङ्कयन्ती । केनेद वक्त्रपद्म स्फुरदमधुरस खण्डित केन पीत स्वर्ग केनाद्य भुक्तो हरनयनहतो मन्मथ कस्य तुष्ट ॥६॥

## संभोगाविष्करणम्

रतखिन्नतनु प्रातर्लज्जानम्रमुखीं वधूम् । स्मरन्तीं रात्रिचरित दृष्ट्वाप्नोति न को मुदम् ॥ १ ॥ राजते राजरामाया एष बिम्बाधरव्रण । सुधा पीत्वेव कान्तेन तच्छेषोऽय स मुद्रित ॥ २ ॥ आच्छादयसि किं मुग्धे वस्त्रेणाधरपल्लवम् । खण्डिता एव शोभन्ते वीराधरपयोधरा ॥ ३ ॥ सखि दशनक्षतमधरे किं गोपयसे प्रयत्नेन । सप्रति रजनिरहस्य नयनाल्स्य निवेदयति ॥ ४ ॥ संवरणाय वधूटी बहुपरिपाटी करोतु किं तेन । सप्रति रजनिरहस्य नयनालस निवेदयति ॥ ५ ॥ उषसि परिवर्तयन्त्या मुक्तादामोपनीतना नीतम् । पुरुषायितवैदग्ध्य लज्जावति कैन कलितते ॥ ६ ॥ चन्दन स्तनतटेऽधरबिम्बे यावक घनतर च सपत्न्या । प्रातरीक्ष्य कुपितापि मृगाक्षी सागसि प्रियतमे परितुष्टा ॥ ७ ॥ दर्पणेषु परिभोगदर्शिनी पृष्ठत प्रणयिनो निषेदुष । प्रेक्ष्य बिम्बमनुबिम्बमात्मन कानि कानि न चकार लज्जया ॥ ८ ॥ किमपि कान्तभुजान्तरवर्तिनी कृतवती यदिय कलभाषिणी । तदनुकृत्य गिरा गुरुसंनिधौ ह्रियमनीयत सारिकया वधू ॥ ९ ॥ धन्यासि या कथयसि प्रियसगमेऽपि नर्मोक्तिचाटुकशतानि रतान्तरेषु । नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्य शपामि यदि किंचिदपि स्मरामि ॥ १० ॥ बहु जगद पुरस्तात्तस्य मत्ता किलाह चकर च किल चाटु प्रौढयोषिद्वदस्य । विदितमिति सखिभ्यो रात्रिवृत्त विचिन्त्य व्यपगतमदयाह्नि व्रीडित मुग्धवध्वा ॥ ११ ॥ शशपदमणिमाल चन्द्ररेखाभिराम ललितपुलकजाल लक्ष्यबिन्दुप्रवालम् । वपुरनघमुष्या वक्ति कस्यापि यून सुरतकलहलीलासूक्ष्ममार्गाभियोगम् ॥ १२ ॥ प्रभाते पृच्छन्तीरनुरहसवृत्त सहचरीर्न वोढा न व्रीडामुकुलितमुखीय सुखयति । लिखन्तीना पत्राङ्कुरमनिशमस्यास्तु कुचयोश्चमत्कारो गूढ करजपदमासा कथयति ॥ १३ ॥ क्वचित्ताम्बूलाक्त क्वचिदगुरुपङ्काङ्कमलिन क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपद । वलीभङ्गाभोगैरलकपतितै शीर्णकुसुमै स्त्रिय सर्वावस्थ कथयति रत प्रच्छदपट ॥ १४ ॥ नखक्षतमुर स्थलेऽधरदले रदस्य व्रण च्युता बकुलमालिका विगलिता च मुक्तावली । रतान्तसमये मया सकलमेतदालोकित स्मृति क्व च रति क्व च क्व च तवालि शिक्षाविधि ॥ १५ ॥ वक्षस्ते दृढलमककशकुचद्वन्द्वानभिमान्तर कण्ठ कङ्कणरत्नकोटिस्खलनासुव्यक्तमुद्राङ्कित । व्यत्यासव्यतिषञ्जितश्च तिलक फाले तवाय सखे कस्याश्चित्प्रकटीकरोति सुरतप्रौढि परा मुग्धर ॥ १६ ॥ तस्या पाटलपाणिजाङ्कितमुरो निद्राकषाये दृशौ निर्धूताधरशोणिमा विलुलितस्रस्तस्रजो मूर्धजा । काञ्चीदाम दरश्लथाञ्चलमिति प्रातर्निरातैर्दृशो रेभि कामशरैस्तदद्भुतमहो पत्युर्मन कीलितम् ॥ १७ ॥ यद्रात्रौ रहसि व्यपेतविनय वृत्त रमात्कामिनोरन्योन्य शयनीयमीहितरसात्तातिप्रवृत्तस्पृहम् । तस्यानन्दमिलद्दृशो कथमपि स्मृत्वा गुरूणा पुरो हासोद्भेदनिरोधमन्थरमिलत्तारं कथंचित्स्थितम् ॥ १८ ॥ दम्पत्योर्निशि जल्पतोर्गृहशुकेना कर्णित यद्वचस्तत्प्रातर्गुरुसंनिधौ निगदतस्तस्यातिमात्रं वधू । कर्णालम्बितपद्मरागशकल विन्यस्य चञ्च्वा पुटे व्रीडार्ता प्रकरोति दाडिमफलव्याजेन वाग्बन्धनम् ॥१९॥ धन्यास्ता सखि योषित प्रियतमे सर्वाङ्गलग्नेऽपि या प्रागल्भ्य रचयति

१ पयोभि- २ देवतानाम् ३ आनशरीरविकृति

मन्मथनिधानात्स्वस्य धैर्यं महत् । अस्माकं तु तदीयपाणि कमलेनोन्मोचयत्यंशुकं कोऽयं वा वयमत्र किं च सुरत नैव स्मृतिर्नायते ॥ २० ॥ कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनात्तद्वासः श्लथमेखलागुणधृतं किंचिनि तम्बे स्थितम् । एतावन्मम वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः कोऽसौ कोऽस्मि रतं नु वा कथमिति स्वल्पापि मे न स्मृतिः ॥ २१ ॥ गाढाश्लेषविशीर्णचन्दनरजःपुञ्जप्रमारादियं शय्या संप्रति कोमलाङ्गि परुषेत्यारोप्य मां वक्षसि । गाढौष्ठमहं पूर्वमातुरतया पादाग्रसंदंशकेनाकृष्याम्बरमात्मनो यदुचितं धूर्तेन तत्प्रस्तुतम् ॥ २२ ॥ निद्रातुन्दिलशोणलोचनयुग दत्ताङ्कदन्तच्छदं पर्यस्तालकवल्लि घर्मपटलप्रामृष्टपत्रावलि । जृम्भाजृम्भितसीधुसौरभमिलद्भृङ्गीभिरङ्गीकृतस्तोत्र शंसति वक्त्रमेव रजनीवृत्तान्तमेणीदृशः ॥ २३ ॥

## प्रियप्रस्थानावस्थाकथनम्

*मुग्धा कान्तस्य यात्रोक्तिश्रवणादेव मूर्छिता ।* बुद्धा पश्यति प्रियं दृष्ट्वा किं चिरेणागतो भवान् ॥ १ ॥ यामीति प्रियपृष्टया प्रियाया कण्ठलग्नयोः । वचोजीवितयोरासीत्पुरोनिःसरणे रणः ॥ २ ॥ *बाष्पाकुलं प्रलपतोर्गृहिणि* निवर्तस्व कान्त गच्छेति । यातं दयत्पलोर्दिनमनुगमनावधि सरम्मीरे ॥ ३ ॥ यामि न यामीति धवे वदति पुरस्तात्क्षणेन तन्वङ्ग्याः । गलितानि पुरो वलयान्यपराणि तथैव दलितानि ॥ ४ ॥ मनसि विविशते स कोऽपि तापप्रापितानि बाहुलतातरङ्गितेऽपि । सरसिजमकरन्दगन्धबन्धुर्वहति यदेष शनैः शनैः समीरः ॥ ५ ॥ कान्ते कथंचिद्गदितप्रयाणे क्षणं विनम्रा विरहार्दिताङ्गी । ततः समालोक्य कदागतोऽसीत्याप्याय कान्ता मुदमाससाद ॥ ६ ॥ लज्जा विहाय रुदितं विधृतः पटान्ते मा गास्त्वमित्युदितमञ्जल्यो मुखेऽस्याः । भ्रिया पुरः पतितमेव निवेतनाय प्राणेश्वरे प्रजति किं न कृतं कृशाङ्ग्या ॥ ७ ॥ गन्तुर्विनम्र दुदये हृदयेश्वरस्य प्रत्यूषमारीतिनिदक्षमजातकम्पा । निद्रां जलैरशिशिरैर्नयनाम्बुजाते कान्ता तदमरिशिरे पतितैर्जहार ॥ ८ ॥ प्राणेश्वरे विशति जन्मति निर्गमाय क्षामोदरी यदनमानमयाचयार । आर्ता पुनर्नभृतमेत्य स्तनिकुञ्ज मुन्नतकोकिलकलध्वनिमाततान ॥ ९ ॥ गन्तुं प्रिये वदति निश्चयितं न दीर्घमासीत्तयोर्नयनयोर्नन्मानिरासीत् । आयुर्विधि पठितुर्मोदरा परतु भास्वती किमु वर सदु दानगाम ॥ १० ॥ प्रहरविरतौ मध्ये वाहस्तोऽपि परेण वा किमुत सकले याते वाह्नि प्रिय त्वमिहैष्यसि । इति दिनशतप्राप्यं देशं प्रियस्य यियासतो हरति गमनं बाला लापैः सबाष्पजलाकुलैः ॥ ११ ॥ पितुर्गृहपुरं त्यक्त्वा सार्धं मम निजबाधवैर्न च परिचितिर्नीता पत्युर्गृहेऽपि कयाचन । कतिपयदिनोद्वस्येऽस्मिन् प्रिये प्रवसत्यसौ कथयतु मनस्ताप कस्मै नव नवगामिनी ॥१२॥ सान्त्वप्रायैः प्रणयवचनैर्गन्तुमापृच्छमाने कान्ते तिर्यङ्नमितवदना रुन्धती बाष्पपूरम् । दीर्घाच्छ्वासस्थगननिकोलमपि नासापुटान्ता सव्याङ्गुल्या गणयति मृगीलोचना कङ्कणानि ॥१३॥ यामी त्युक्ते हृदयवविना प्रेयसा शङ्खभूषा नैव सैरं झटिति गलिता पाणिपद्मग्रहाग्रात् । नो यास्यामीत्युत्तरपदमिमां वाचमाकर्णयन्त्यालाव्या शेषा अपि चटचटेलेव भग्ना समीपु ॥ १४ ॥ आयाते श्रुतिगोचरं प्रियतमप्रस्थानकाले बलात्तत्स्थानस्थितया तया जनमलं दृष्ट्वा चिरं मुग्धया । सोच्छ्वास दृढमश्रुनिर्भरगलद्बाष्पाम्बुधौतं तया न्यस्य निर्विवेश्य मन्दृहृदये निःशब्दकं रुद्यते ॥ १५ ॥ दृष्ट कातरनेत्रया चिरतरं बद्धाञ्जलि याचितं पश्चादंशुकपल्लवेन विधृतो निर्व्याजमालिङ्गितः । इत्याक्षिप्य समस्तमर्मसघृणो गन्तुं प्रवृत्त शठ पूर्वं प्राणपरिग्रहो दयितया मुक्तस्ततो वल्लभः ॥ १६ ॥ लग्ना नाशुकपल्लवे भुजलता नो द्वारदेशेऽर्पिता नो वा पादयुगे तया निपतितं तिष्ठेति नोक्तं वचः । काले केवलमम्बुदालिमलिने गन्तुं प्रवृत्तः शठस्तन्व्या बाष्पजलौघकल्पितनदीपूरेण रुद्धः प्रियः ॥ १७ ॥ दूरं सुन्दरि निर्गतामि नगरादेष द्रुमः क्षीरवानस्मादेव निवर्ततामिति शनैरुक्त्वा प्रयोगेन प्रियाम् । गाढालिङ्गनचञ्चितस्तनतटाभोगस्फुटत्कञ्चुकीश्योरस्त्वलमश्रुपूरितदृशः प्रस्थानमङ्ग स्मृत ॥ १८ ॥ यामि प्रेयसि वारिदागमदिने जानीहि मामागतं चिन्ता चेतसि मा विधेहि कथयन्नेव समाप्ते मयि । निःश्वासैः पवनायितं घनतनोरङ्गैः कदम्बायितं बाला केतकपत्रकायितमहो रम्या पयोदायितम् ॥ १९ ॥ *यामीत्यप्रियवादिनि* प्रियतमे मुद्रामलङ्कृत्य केनचित्प्रवहिर्नितेश्चरणे भूमौ शरीरस्थितिः । अन्तर्गानगते पुनर्मृगदृशो बाष्पा विभिन्ना दशा लाजावरोट इव स्फुटत्प्रतिरलं हारोऽपि यामगुरुः ॥ २० ॥ प्रस्थानं वलयैः कृतं प्रियसखैरस्रैजस्रं गतं धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः । यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमु त्यज्यते ॥ २१ ॥ गच्छामीति मया मृगाक्षि निगदते त्यक्त्वा निर्निमेषं बाष्पस्तोमधिकेन मां पशुना । अथ प्रेम मदर्पितं प्रियसखीवृन्दे त्वया बध्यतामित्थं स्नेहविवर्धिनो मृगशिशुः पोष्यस्तु मामासीत ॥ २२ ॥ खिन्नात्मेदृग्विनिवृत्तेन मनसा मौनेन

१ प्रस्थानम्. २ प्रथम. ३ प्रियकुसुमि. ४ मरन्दो. ५ द्रुमोऽस्या. ६ दृष्टिः.

पादानत प्रत्याख्यानपराङ्मुख प्रियतमो गन्तु प्रवृत्तो ऽधुना। सव्रीडैरलसैर्निरन्तरलुठद्बाष्पाकुलैर्लोचनै श्वासोत्कम्प कुच निरीक्ष्य सुचिर जीवाशया वारित ॥ २३ ॥ कान्तो यास्यति दूरदेशमिति मे चिन्ता परं जायते लोकानन्दकरो हि चन्द्रवदने वैरायते चन्द्रमा । किं चाय वितनोति कोकिलकलालापो विलापोदय प्राणानेव हरन्ति हन्त नितरामारामन्दानिला ॥ २४ ॥

## सखीं प्रति नायिकावाक्यम्

वयो नव्य स्वान्त विषयतरल हन्त सतत प्रियो दूरे देशे जनकनगर दुर्लभतरम् । जनश्वाय दुष्टो भृशमिदमनर्थाय सतत कथकार पार कथय सखि यामोऽस्य वयस ॥ १ ॥ आयाता जलदावली सरभस विद्युत्समालिङ्गिता शैलाना परित सशब्दमहिमुक्श्रेणी नरीनृत्यति । एव सत्यपि हन्त सप्रति पतिर्देशान्तर प्रस्थितस्तदु ख विनिवेदयता सखि कथ कस्याधुनाग्रे मया ॥ २ ॥

## नायकं प्रति नायिकोक्तयः

गच्छ गच्छसि चेत्कान्त पन्थान सन्तु ते शिवा । ममापि जन्म तत्रैव भूयाधन गतो भवान् ॥ १ ॥ न चिरं मम तापाय तव यात्रा भविष्यति । यदि यास्यसि यातव्यमलमाशङ्कयापि ते ॥ २ ॥ सहिष्ये विरह नाथ देहादृश्याञ्जन मम । यदक्तनेत्रा कदर्प प्रहर्तु मा न शक्ष्यति ॥ ३ ॥ प्राणेश विज्ञप्तिरिय मदीया तत्रैव नेया दिवसा कियन्त । सम्प्रत्ययोग्यस्थितिरेष देश करा हिमांशोरपि तापयन्ति ॥ ४ ॥ एतस्मिन्सहसा वसन्तसमये प्राणेश देशान्तर गन्तु त्व यतसे तथापि न मय तापाप्रपद्येऽधुना । यस्मात्कैरवसारसौरभमुषा साक सरोवायुना चान्द्री दिक्षु विजृम्भते रजनिषु स्वच्छा मयूखच्छटा ॥ ५ ॥ लोलैर्लोचनवारिमिश्र शपथै पादप्रणामै परैरन्यासा विनिवारयन्ति कृपणा प्राणेश्वर प्रस्थितम् । पुण्याह व्रज मङ्गल सुदिवस प्रात प्रयातस्य यत्स्वत्स्नेहोचितमीहित प्रिय मया त्व निर्गत श्रोष्यसि ॥ ६ ॥ मास्ताश्रूततरुर्गुरुर्मनसिज कोऽप्येष भृङ्गस्वनो मन्दो गन्धवहः सितो मलयजो दोषाकरो माधव । अङ्गारो नवपल्लव परभृतो विशो गुरोराज्ञया निर्यातोऽसि विचारिता कथममी क्रूरा मदा न त्वया ॥ ७ ॥ मा याहीत्यपमङ्गल व्रज किल स्नेहेन शून्य वचस्तिष्ठेति प्रभुता यथारुचि कुरुष्वैपाप्युदासीनता । नो जीवामि विना त्वयेति वचन संभाव्यते वा न वा तन्मां शिक्षय नाथ यत्समुचित वक्तु त्वयि प्रस्थिते ॥ ८ ॥

१ मयूरपङ्क्ति- २ स्मरणसंसूचनेन गमननिषेधो गर्भीकृत

## नायकं प्रति सखीवाक्यम्

किमिति सखे परदेशे गमयसि दिवसान्धनाशया लुब्ध । वर्षति मौक्तिकनिकर तव भवनद्वारि काञ्चनी वल्ली ॥ १ ॥ या बिम्बौष्ठरुचि क्व विद्रुममणि स्वप्नेऽपि ता लब्धवान् हासश्रीसदृशैस्तपोभिरपि किं मुक्ताफलैर्भूयते । तत्कान्तिशतशोऽपि वह्निपतनैर्हेम क्व तत्सेत्स्यति त्यक्त्वा रत्नमयीं प्रयासि दयिता कस्मै धनायाध्वग ॥ २ ॥ उपद्रुहिंषि दुर्दरावपुषि प्रक्षीणपान्थायुषि श्च्योतद्विमुषि चन्द्ररुड्मुषि सखे हसद्विषि प्रावृषि । मा मुञ्चोच्चकुचान्तसततगलद्बाष्पाकुला बालिका काले कालकरालनीलजलदव्यालुप्तभास्वत्त्विषि ॥ ३ ॥ मा गच्छ प्रमदाप्रिय प्रियशतैरभ्यर्थितस्त्व मया बाला प्राङ्गणमागतेन भवता प्राप्नोत्यवस्था पराम् । किं चास्या कुचभारनि सहतरैरङ्गैरनङ्गाकुलेस्तुट्यत्कञ्चुकजालकै रनुदिन नि सूनमस्तद्वहम् ॥ ४ ॥

## सखायं प्रति नायकोक्तिः

शेते शीतकरोऽम्बुजे कुवलयद्वन्द्वाद्विनिर्गच्छति स्वच्छा मौक्तिकसहतिर्धवलिमा हैमीं लतामञ्चति । स्पर्शोत्पङ्कजकोशयोरभिनवा यान्ति स्रज क्लान्ततामेषोत्पातपरम्परा मम सखे यात्रास्पृहा कृन्तति ॥ १ ॥

## नायिकां प्रति सखीवाक्यम्

वारंवारमुदश्रु लोचनयुग पर्याकुल जायते नि श्वासा विरमन्ति न क्षणममी व्याक्लिष्टदन्तच्छदा । प्रस्थानश्रवणादपि प्रियतमस्याहो तवेय स्थितिर्नो जाने निलय गते तु दयिते कीदृग्दशामाप्स्यसि ॥ १ ॥

## देशान्तरोपगतो नायक

दिदृक्षमाण क्षणमायताक्ष्या मुखाम्बुज मञ्जुलमध्वनीन । मुहूर्तमात्र सुमुहूर्तकाले सवर्षकाल कल्पयाचकार ॥ १ ॥ निशम्य केलीभवनोपकण्ठे मञ्जीरमञ्जुध्वनिमध्वनीन । यथा तथा बद्धकथावशेष समापयामास सम सुहृद्भि ॥ २ ॥ मुख प्रियाया समुदीक्षमाण कान्तो दिनस्यान्तमपेक्षमाण । मुहुर्मुहुर्व्योमनि तिग्मभानौ निवेशयामास विलोचने स्वे ॥ ३ ॥

## वसन्तवर्णनम्

मधुपराजिपराजितमानिनीजनमन सुमन सुरभिश्रियम् । अभृत वारितवारिजविप्लव स्फुटितताम्रततामवन जगत्

१ विस्तीर्णम्

